# FRAGMENTS

OF

# THE COMMENTARIES

OF

## SKANDASVĀMIN AND MAHEŚVARA

ON

# THE NIRUKTA.

Edited for the first time from the original palm leaf and paper manuscripts, written in Malyalam and Devanāgrī characters with an Introduction and Critical Notes

BY


LAKSHMAN SARUP M. A. (PANJ), D. Phil. (OXON),
GOVERNMENT OF INDIA SANSKRIT SCHOLAR,
PROFESSOR OF SANSKRIT,
ORIENTAL COLLEGE,
LAHORE







PUBLISHED BY THE UNIVERSITY OF THE PANJAB.

श्रीस्कन्दस्वामिमहेश्वरविरचिता

# निरुक्तभाष्यटीका

नैघण्टुटीकायां देवराजयज्वोद्धृतस्य स्कन्दस्वामिप्रणीतभाष्यस्य संदर्भैः सहिता



मलयदेवनागरीलिपिलिखितानि प्राचीनतालपत्रादर्शपुस्तकानि
पर्यालोच्य



पञ्चनदीयप्राच्यमहाविद्यालयसंस्कृताध्यापकेन

**लक्ष्मणस्वरूप एम. ए.**

(पञ्जाब), डी फिल (ऑक्सफ़ोर्ड) इत्येतेन सम्पादिता



उपोद्धातेन समालोचनात्मिकया टिप्पण्या सुपरिष्कृता ।

सा च

पञ्चनदीयविश्वविद्यालयाध्यक्षैः प्रकाशिता

# INTRODUCTION

As the Mss material is not adequate, this is merely a tentative edition of the commentary of Skanda Maheśvara on the *Nirukta* The following Mss have been collated

*A* A Devanāgarī transcript of a fragment of the commentary from the Central Library, Baroda

*B* A Devanāgrī transcript of the commentary on the first chapter of the *Nirukta* only, from the Government Library of Sanskrit Mss, Madras The Madras Ms is T 3 17 and is itself a transcript of a Malyalam Ms owned by M R Ry K V Paramesvara Vadhyar Nambudiri of Achipuram, Kottakal P O, Malabar The transcript was made in 1922-3 The final colophon is given on F 706 *v* and reads as follows —

निरुक्तमन्त्रभाष्यार्थपूर्ववृत्तिसमुच्चय ।
महेश्वरेण रचितस्सूनुना पितृशर्मण ॥
इति महेश्वररचिता निरुक्तभाष्यटीका समाप्ता ।

*C* A palm leaf Ms written in old Malyalam Script at the Lalchand Library, Lahore This is a complete Ms of the commentary Number of lines per page is 11 and the total number of leaves is 146 Size --22″ × 2″ Its colophons are given below —

F 6*v* — ॥ आचार्यमहेश्वरकृतायां निरुक्तभाष्यटीकायां प्रथमस्याध्यायस्य प्रथम पाद् ॥

F 13*v* — ॥ इति स्कन्दस्वामिकृतायां निरुक्तटीकायां षष्ठस्य तृतीय पाद. ॥

F 15*v* — ॥ इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ षष्ठस्य चतुर्थ पाद ॥

F 17*v* — ॥ इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ षष्ठस्य पञ्चम पाद ॥

F 20*v* — ॥ इत्याचार्यस्कन्दस्वामिकृतौ निरुक्तटीकायां षष्ठोऽध्याय समाप्त ॥

F 26*v* — ॥ इत्याचार्यस्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्याध्यायस्य प्रथम पाद ॥ प्रथम पादः ॥

F 30*v* — ॥ इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ सप्तमस्य द्वितीयः पाद. ॥

F 31r — ॥ इति सप्तमस्य तृतीय पाद ॥

F 34r — ॥ सप्तमस्य चतुर्थ पाद ॥

F 35r — ॥ इति सप्तमस्य पञ्चम पाद ॥

F 37r — ॥ इत्याचार्यमहेश्वरकृताया निरुक्तभाष्यटीकायां सप्तमोऽध्याय ॥

F 39r — ॥ इति महेश्वरविरचितायां निरुक्तभाष्यटीकायामष्टमस्याध्यायस्य प्रथम पाद ॥

F 42r — ॥ इत्यष्टमस्य द्वितीय पाद ॥

F 46r — ॥ इति निरुक्तटीकायामष्टमस्य तृतीय पाद ॥

F 48r — ॥ निरुक्तमन्त्रभाष्यार्थपूर्ववृत्तिसमुच्चय ।
(*Sic*) मन्त्रेण रचितस्सूनुना पितृशर्मण
इत्यष्टमोऽध्याय ॥

F 52r — ॥ इति स्कन्दस्वामिकृतायां निरुक्तटीकायां नवमस्याध्यायस्य प्रथम पाद. ॥

F 55r — ॥ इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ नवमस्याध्यायस्य द्वितीय. पाद ॥

F 58v — ॥ इति स्कन्दस्वामिकृताया निरुक्तवृत्तौ नवमस्याध्यायस्य तृतीय पाद. ॥

F 67v — ॥ इति स्कन्दस्वामिकृते विवरणसमुच्चये दशमस्याध्यायस्य प्रथम पाद. ॥

F 71v — ॥ इति स्कन्दस्वामिकृते निरुक्तविवरणसमुच्चये दशमस्याध्यायस्य द्वितीय· पाद ॥

F 74v — ॥ इति निरुक्तविवरणसमुच्चये दशमस्याध्यायस्य तृतीय पाद. ॥

F 77r — ॥ इति निरुक्तविवरणे दशमोऽध्याय. समाप्त ॥

F 81r — ॥ इति निरुक्तविवरणे एकादशाध्यायस्य प्रथम पाद ॥

F 83v — ॥ इति निरुक्तविवरणसमुच्चये एकादशस्य द्वितीय पाद ॥

F 88r — ॥ इति निरुक्तविवरणसमुच्चये एकादशस्य तृतीय पाद ॥

F 92r — ॥ इति निरुक्तविवरणसमुच्चये एकादशस्याध्यायस्य चतुर्थ पाद. ॥

F 94v — ॥ इति निरुक्तविवरणसमुच्चये एकादशस्याध्यायस्य पञ्चम. पाद ॥·

F 96v — ॥ इति निरुक्तविवरणे एकादशस्याध्यायस्य षष्ठ पाद समाप्तश्चाध्याय ॥

F 100r — ॥ इति महेश्वरविरचिते निरुक्तविवरणसमुच्चये द्वादशस्य प्रथम पाद ॥

F 102v — ॥ इति निरुक्तविवरणसमुच्चये द्वादशस्य द्वितीय पाद ॥

F 105v — ॥ इति महेश्वरकृते निरुक्तभाष्यविवरणसमुच्चये द्वादशस्य तृतीय पाद ॥

F 107r — ॥ इति निरुक्तभाष्यविवरणे द्वादशस्य चतुर्थ पाद. ॥

F 108v — ॥ इति द्वादशस्य षष्ठ. पाद ॥

F 110r — ॥ इति महेश्वरविरचिते निरुक्तविवरणसमुच्चये द्वादशोऽध्याय ॥

F 112r .— ॥ इति त्रयोदशस्य प्रथम पाद ॥

F 114ʳ — ॥ इति त्रयोदशस्य द्वितीय पाद ॥

F 115ʳ — ॥ (Sic) इति निरुक्तविवरणसमुच्चये त्रयोदशस्याध्यायः समाप्तम् ॥

F 116ᵛ — ॥ इति चतुर्दशस्य प्रथम पाद ॥

F 118ʳ — ॥ इति चतुर्दशस्य द्वितीय पाद ॥

F 119ᵛ — ॥ इति चतुर्दशस्य तृतीय पादः ॥

F 120ᵛ — ॥ इति चतुर्दशोऽध्यायस्समाप्त ॥

F 122ᵛ — ॥ इति पञ्चदशस्याध्यायस्य प्रथमः पाद ॥

F 124ᵛ — ॥ इति निरुक्तविवरणसमुच्चये पञ्चदशस्य द्वितीय पाद ॥

F 126ᵛ — ॥ इति निरुक्तविवरणसमुच्चये पञ्चदशस्य तृतीय पाद ॥

F 128ʳ — ॥ इति निरुक्तविवरणभाष्ये पञ्चदशोऽध्याय. ॥

F 131ʳ — ॥ इति षोडशस्य द्वितीय. पाद. ॥

F 132ʳ — ॥ इति षोडशस्य तृतीय पाद ॥

F 135ᵛ — ॥ इति निरुक्तविवरणसमुच्चये षोडशोऽध्याय ॥

F 138ʳ — ॥ इति सप्तदशस्य प्रथम पाद ॥

F 139ʳ — ॥ इति सप्तदशस्य द्वितीय पाद ॥

F 141ᵛ — ॥ इति सप्तदशस्य तृतीय पाद ॥

F 143ʳ — ॥ इति निरुक्तटीकायां सप्तदशाध्यायस्समाप्त ॥ It goes on —(Sic)
यथा प्रतिज्ञातं समाम्नायो व्याख्यात. । इदानी पूर्वाचार्याणां मतानुवृत्ति-
तत्परतया अथेमा अतिस्तुतयेत्याचक्षत इति इह यस्यां देवतायामित्यत्र
स्तुतिलक्षणादेवत्येति देवतालक्षणमुक्तम् ॥

F 146ʳ — ॥ निरुक्तमन्त्रभाष्यार्थपूर्ववृत्तिसमुच्चय ।
महेश्वरेण रचित सूनुना पितृशर्मण· ॥
इति महेश्वरविरचिता निरुक्तभाष्यटीका समाप्ता ॥
भूयसा यत्प्रकाशेन मत्यव्यालोकसम्भवे ।
सन्तस्सर्वं विचिन्वन्ति वन्दे तद्वाङ्मयं महः ॥
श्रीरामा । श्रीगुरुभ्यो नम ॥ श्रीव्यासाय नम ॥

*D* A paper Ms written in Devanāgarī characters, obtained through the courtesy of P Vidhuśekhara Bhaṭṭācārya, Principal of the Sanskrit College at the Viśvabhāratī University, Shantiniketana, Bengal This is a fragment, giving the commentary on a part of the second, and a section of the third chapter of the *Nirukta*. As

it does not contain the commentary on the first chapter of the *Nirukta*, it could not be collated for the present edition But I give below its colophons which are interesting —

F 39r — ॥ इत्याचार्यस्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य प्रथम पाद. ॥
F 44v — ॥ इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य द्वितीय पाद. ॥
F 47r — ॥ इति स्कन्दस्वामिकृतौ सप्तमस्य तृतीय पाद ॥
F 49r — ॥ इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य चतुर्थ पाद ॥
F 50r — ॥ इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य पञ्चम. पाद ॥
F 52v — ॥ इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य षष्ठ' पाद ॥
F 54v — ॥ इति निरुक्तटीकायां सप्तमोऽध्याय ॥
F 59r — ॥ इत्यष्टमस्य प्रथमः पाद ॥

## Relationship of Mss

The Mss fall into two groups One is represented by A and the other by B and C

A contains two introductory stanzas[1], which are omitted by B and C It amplifies the derivation of the word *Nighaṇṭu*, for which there is nothing corresponding in B and C[2] It illustrates the meaning of √*han* with *ā* with two examples which are not found in B and C[3] It also contains longer passages as compared with those of B and C Reference is to footnotes 8 on p 6, 5 and 20 on p 7, 4 and 16 on p 8, 24 on p 52 A often quotes long passages from the commentary of Durgācārya, see footnote 20 on p 112, 3 on p 116, 4 on p 121 These quotations from the commentary of Durga are not found in B and C Further A often reads additional single words which are omitted by B and C, see footnotes 4, 5 on p 12, 2, 3, 8, 11 on p 13, 8 on p 14, 16 on p 16, 6 on p 38 etc. A few example may as well be given.

P 1 1 3 :—A reads छन्दोविचितिः । B and C read छन्द. ।
" " " 7 :— " " अध्ययनकाले । " " काले ।

1 See footnote १ on p 3
2 See footnote २ on p 5
3 See footnote ११ on p. 5

P 1 1 9 — A reads ०राधीतेनापि मन्त्रेण । B and C read ०राधीतेन ।
,, ,, ,, 10 — ,, ,, प्रयोगरूपप्रतिपादनेन । ,, ,, प्रतिपादनेन
, ,, ,, 11 — ,, ,, स्तोत्रशास्त्रादे । ,, ,, स्तोत्रादे ।

Further A often uses case-inflections, dispensed with by B and C A few examples are the following —

P 1 1 11 — A reads छन्दसो रूपम् । B and C read छन्दोरूपम् ।
,, , ,, 12 — , ,, स्वरूपस्य प्रतिपादनेन । ,, स्वरूपप्रतिपादनेन ।
and so on On the contrary A often gives shorter forms, *e g*, p 2 1 10 A reads अर्हे कृत्य whereas B and C read अर्हे कृत्यप्रत्यय । P 1 1 10 A reads प्रतिपन्नस्य, B and C read निजशाखाप्रतिपन्नस्य and so on

Further B and C occasionally read passages omitted by A, for example see footnotes 4 and 16 on p 3, 18 21 on p 4, 10 on p 8, 18 on p 9, 1, 7, 13, 14 on p 12, 19 on p 13, 14 on p 17, 2 on p 48 and so on But it is clear that on the whole A represents a longer version as compared with that of B and C Both groups are corrupt and do not correctly transmit the archetype The mutual relationship of Mss can be shown by the following diagram, assuming N to represent the archetype —




AUTHOR OF THE COMMENTARY

The authorship of the commentary is attributed both to Skanda and Maheśvara This will be clear from the following colophons of the three Mss *i e* A, B and C The colophons are placed side by side for ready reference

P. 53. A इत्याचार्यमहेश्वरकृतायां निरुक्तभाष्यटीकायां षष्ठस्याध्यायस्य प्रथमः पादः ।

P 32 B आचार्यमहेश्वरकृताया निरुक्तभाष्यटीकाया प्रथमस्याध्यायस्य प्रथमः पाद ।

F $6^r$ C आचार्यमहेश्वरकृतायां निरुक्तभाष्यटीकायां प्रथमस्याध्यायस्य प्रथम पाद ।

P 83 A इति स्कन्दस्वामिकृतायां निरुक्तटीकायां षष्ठस्य द्वितीय पाद ।

B Missing

C Missing

P 103 A इति स्कन्दस्वामिकृताया निरुक्तटीकायां षष्ठस्य तृतीय पाद ।

P 62 B Identical with A

F $13^r$ C Identical with A

P 118 A इति स्कन्दस्वामिकृतायां निरुक्तटीकाया षष्ठस्य चतुर्थ पाद ।

P 70 B इति स्कन्दस्वामिकृताया निरुक्तवृत्तौ षष्ठस्य चतुर्थ पाद ।

F $15^r$ C Identical with B

P 132 A इति स्कन्दस्वामिकृतायां निरुक्तटीकाया षष्ठस्य पञ्चम पाद ।

P 78 B इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ षष्ठस्य पञ्चम पाद ।

F $17^r$ C Identical with B

P 157 A इति स्कन्दस्वामिकृतायां निरुक्तटीकायां षष्ठोऽध्याय ।

P 91 B इत्याचार्यस्कन्दस्वामिकृतौ निरुक्तभाष्यटीकायां षष्ठोऽध्याय समाप्त ।

F $20^r$ C इत्याचार्यस्कन्दस्वामिकृतौ निरुक्तटीकाया षष्ठोऽध्यायः समाप्त ।

This is further supported by colophons of Ms D The colophons of Mss C and D are placed side by side below It may be added that the commentary on the second chapter of the *Nirukta* is available in Mss C and D only It may possibly be available in B also but I have not yet been able to get a transcript of this portion of Ms B

F. $39^r$ D. इत्याचार्यस्कन्दस्वामिकृताया निरुक्तटीकायां सप्तमस्य प्रथम पादः ॥

F $26^r$ C इत्याचार्यस्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्याध्यायस्य प्रथम पाद ॥ प्रथम पाद ॥

F $44^v$ D इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य द्वितीय पाद. ॥

F $30^r$ C इति स्कन्दस्वामिकृताया निरुक्तवृत्तौ सप्तमस्य द्वितीय पाद ॥

F. $47^r$ D, इति स्कन्दस्वामिकृतौ सप्तमस्य तृतीय पाद ॥

F. $31^v$ C. इति सप्तमस्य तृतीय. पाद. ॥

F 49r D इति स्कन्दस्वामिकृताया निरुक्तटीकायां सप्तमस्य चतुर्थ पाद ॥
F 34r C इति सप्तमस्य चतुर्थ पाद ॥
F 50r D इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य पञ्चम पाद ॥
F 35v C इति सप्तमस्य पञ्चम पाद ॥
F 52r D इति स्कन्दस्वामिकृतायां निरुक्तटीकायां सप्तमस्य षष्ठ पाद ॥
This colophon is missing in Ms C
F 54r D इति निरुक्तटीकायां सप्तमोऽध्याय ॥
F 37r C इत्याचार्यमहेश्वरकृतायां निरुक्तभाष्यटीकाया सप्तमोऽध्याय ॥
F 59r D इत्यष्टमस्य प्रथम पाद ॥
F 39r C इति महेश्वरविरचितायां निरुक्तभाष्यटीकायामष्टमस्याध्यायस्य प्रथम पाद ॥

All the Mss have preserved a unanimous tradition in attributing the commentary on some sections of particular chapters to Skanda and on other sections to Maheśvara This fact naturally leads one to conclude that the portion attributed to Skanda was composed by Skanda and that attributed to Mahesvara by Maheśvara It however implies the assumption that both Skanda and Maheśvara commented on mutually exclusive portions of the *Nirukta*, that they worked on a deliberate plan, that they must have been contemporaries to carry out that plan and must have written their commentary in collaboration with each other There are several cases of joint-authorship in Sanskrit Literature, but there are chronological difficulties in making Maheśvara a contemporary of Skanda * Devarāja Yajvan, the commentator of the Nighantu, who seems to be earlier than Durga often quotes Skanda while Maheśvara is certainly later than Durga, whom he mentions by name, and whose commentary on the *Nirukta*, he has utilised and frequently quoted Thus Maheśvara is separated from Skānda by two intervening commentators namely Devarāja Yajvan and Durga The former must have been considerably posterior to the latter At any rate they could not possibly have been contemporaries Further the commentary is not the work of two different

*See my Preface to the Sanskrit Text of the *Nirukta* pp 32 and 33 Panjab University Oriental Publication, 1928

authors It bears the stamp of workmanship of a single individual Its style, its method of treatment, the general exegesis and above all, its intellectual quality are throughout identical It is quite plausible to hold that two different authors could produce a commentary written in an identical style, having an identical method of treatment and identical in general exegesis but no two authors could show an identical intellectual quality

The hypothesis therefore that one part of the commentary is composed by Skanda and another portion by Maheśvara is not tenable

Two hypotheses are now possible —

1 Skanda alone is the author of the commentary

2 Maheśvara is the author of the commentary *in toto*

Let us consider the first hypothesis

The evidence of the final colophons of Mss B and C is against the hypothesis of Skanda's authorship The internal evidence is also against Skanda As already stated, the name of Durga is mentioned in the commentary Quotations from Durga's commentary are frequent Skanda is quoted by Devarāja Yajvan who is anterior to Durga Skanda is therefore still earlier than Durga The former could not have mentioned or quoted the latter

This is further supported by the fact that Devarāja Yajvan has preserved, in his commentary on the Nighantu, several passages of Skanda's commentary on the *Nirukta* Some of these passages are not found in the present commentary Skanda's explanation of the words उर्वी, अदिति, इळा, अध्वरम्, स्व, साध्या, वासरम्, अश्मा, अहि preserved* by Devarāja Yajvan in the form of quotations is not found in the text of the present commentary This commentary is therefore not the work of Skanda

The only other hypothesis possible is that Maheśvara is the author In my opinion, this commentary is the composition of Maheśvara But there is a serious difficulty All the extant Mss attribute some portions of the commentary to Skanda How to

*See pp 125 126 of the present edition

explain the colophons of these Mss ? In my opinion, the difficulty is solved if we presume that Maheśvara's commentary is a ṭīkā on the *bhāṣya* of Skanda This is supported by the title of the commentary, namely '*The Nirukta-bhāṣya*-ṭīkā,' which may be explained as the ṭīkā on the *Nirukta-bhāṣya* Fragments of the *bhāṣya* of Skanda must have undoubtedly formed the basis of the work of Maheśvara and can still be traced as is shown by the following example Skanda's explanation of the word *gau* is preserved as a long quotation by Devarāja Yajvan in his commentary on the *Nighaṇṭu* This quotation is printed on p 125 of the present edition and is given below for facility of reference The explanation of the word *gau* in the commentary in Ms C is the following —

Passage of Ms C

Sic गौरिति पृथिव्या नामधेयम्·
उदाहरणम् गोषदसि इति गार्हपत्योपस्थाने
विनियोगात् गार्हपत्यस्य च गवि पृथिव्यां
सद(साद०)नात् गोशब्दस्य च पृथिव्य-
भिधानता निश्चिता सर्वशब्दानामाख्यात-
जत्वप्रतिज्ञानात् प्रवृत्तिनिमित्तमाह । यद्-
दूरं गता भवति नैरन्तर्येणात्माकाशादिवत् ।
दूरेऽप्युपलब्धेर्गमिक्रियाव्यवहार । अन्यत्र
चान्यत्र चोपलब्धेर्दूरोपदेश । प्रत्ययो-
पात्तरूढ्यर्थसंबन्धाच्च गमिरत्र नैरन्तर्योप-
लब्धिर्दूरविशिष्टगमनमुपादत्ते तथा परि-
व्राजक इति यथा । यद्यपि चायं गोशब्द·
पश्वादावनेकत्र रूढस्तथाप्यस्य तत्र तत्र
मन्त्रवाक्यार्थसमवायसंभवादभिधेयन्नि-
श्चित्य तदवयवभूतस्य गमेस्तद्विशेषयैतव
व्यतिरेकव्यावृत्त्यर्थं पूर्ववत् प्रदर्शनीयेति ।
यच्चास्यां भूतानि प्राणिनो गच्छन्ति चो वार्थे
कारकविकल्पश्चायं कर्तरि कारकेधिकरणे
वेत्यर्थ.। गातेर्वा स्तुत्यर्थस्य औकारप्रत्यय
धातुविकल्पश्चायं स्तूयतेसाविति गौर्गाय-
न्ति वास्यां स्थिता इति गौ,…… ·

Passage preserved by Devarāja Yajvan

गौ (Ngh I 1)—अस्य स्कन्दस्वामी ।
" दूरं गता भवति नैरन्तर्येणात्माकाशादि-
वत् । दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहार ।
अन्यत्रान्यत्र चोपलब्धेर्दूरोपदेश । प्रत्ययो-
पात्तरूढ्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्यो-
पलब्धिदूरविशिष्टं गमनमुपादत्ते । तक्षा
परिव्राजक इति यथा । यच्चास्यां भूतानि
प्राणिनो गच्छन्ति । चो वार्थे । गातेर्वा
स्तुत्यर्थस्य । गीयते स्तूयतेऽसाविति ।
गायन्ति वास्या स्थिता इति गौ ।
उदाहरणम् । 'गोषदसि' इति । गार्हपत्यो-
पस्थाने विनियोगात् गार्हपत्यस्य च गवि
पृथिव्यां सदनात् गोशब्दस्य पृथिव्यभि-
धानत्वन्निश्चितमिति " ॥

A comparison of this passage with Skanda's quotation preserved by Devarāja Yajvan clearly shows that the commentary of Maheśvara is a ṭīkā on the *bhāṣya* of Skandasvāmin Examples can be multiplied but I think it is not necessary to do so It may therefore be stated that the present commentry is the work of Maheśvara and is a futher elucidation of the *bhāṣya* of Skandasvāmin The tradition of the Mss gives indication that the scribe vaguely remembered this fact, confused the author of the ṭīkā with that of the *bhāṣya* and arbitrarily attributed one portion to Skanda and another to Maheśvara But it is possible now to solve the mystery with the help of Devarāja Yajvan

ACKNOWLEDGMENT OF HELP

I owe a deep debt of gratitude to my former teacher Prof A C Woolner, M A , C I E , Principal Oriental College, Lahore, University Professer of Sanskrit, and the Dean of University Instruction, for including the present volume in the Panjab University Oriental Publication Series This is my fourth book on the *Nirukta* to be included in the Series and I hope all lovers of Yāska will appreciate the interest, Mr Woolner has taken in the studies on the *Nirukta* I have to thank my friend, Dr Banarsi Das Jain, M A , Ph D (Lond ) and P Ram Chandra Shastri of the Oriental College, for helping me in correcting the proofs

ORIENTAL COLLEGE,<br>LAHORE<br>*6th April, 1928*

LAKSHMAN SARUP

# विषयानुक्रमणिका ॥

# TABLE OF CONTENTS



I INTRODUCTION 1—14

II The Commentary of Maheśvara on the Nirukta

CHAPTER I

| | |
|---|---|
| 1ST SECTION | 1 |
| 2ND SECTION | 13 |
| 3RD SECTION | 33 |
| 4TH SECTION | 46 |
| 5TH SECTION | 57 |
| 6TH SECTION | 66 |
| 7TH SECTION | 68 |
| 8TH SECTION | 72 |
| 9TH SECTION | 74 |
| 10TH SECTION | 76 |
| 11TH SECTION | 81 |
| 12TH SECTION | 83 |
| 13TH. SECTION | 85 |
| 14TH SECTION | 87 |
| 15TH SECTION | 93 |
| 16TH SECTION | 97 |
| 17TH SECTION | 104 |
| 18TH SECTION | 106 |
| 19TH SECTION | 110 |
| 20TH SECTION | 111 |

III Fragments of the Commentary of Skandasvāmin, preserved as quotations by Devarāja Yajvan in his commentary on the Nighantu. 125

I उपोद्घात १—१४

II महेश्वरविरचिता निरुक्तभाष्यटीका

प्रथमोऽध्यायः

| | |
|---|---|
| प्रथमं खण्डम् | १ |
| द्वितीयं खण्डम् | १३ |
| तृतीयं खण्डम् | ३३ |
| चतुर्थं खण्डम् | ४६ |
| पञ्चमं खण्डम् | ५७ |
| षष्ठं खण्डम् | ६६ |
| सप्तमं खण्डम् | ६८ |
| अष्टमं खण्डम् | ७२ |
| नवमं खण्डम् | ७४ |
| दशमं खण्डम् | ७६ |
| एकादशं खण्डम् | ८१ |
| द्वादशं खण्डम् | ८३ |
| त्रयोदशं खण्डम् | ८५ |
| चतुर्दशं खण्डम् | ८७ |
| पञ्चदशं खण्डम् | ९३ |
| षोडशं खण्डम् | ९७ |
| सप्तदशं खण्डम् | १०४ |
| अष्टादशं खण्डम् | १०६ |
| ऊनविंशं खण्डम् | ११० |
| विंशं खण्डम् | १११ |

III देवराजयज्वकृतायां निघण्टुटीकायामुद्धृता. श्रीस्कन्दस्वामिप्रणीतनिरुक्तभाष्यसन्दर्भाः। ,, ... १२५

महेश्वरविरचिता

# निरुक्तभाष्यटीका



A

# COMMENTARY

ON THE

# NIRUKTA

BY

MAHESHVARA.



1927.

पुरुषस्य[1] प्रवृत्त्यर्थं निवृत्त्यर्थश्च प्रत्यक्षादिभि प्रतिपत्तुमशक्यस्य हितफलस्याग्नि-होत्रादेरहितफलस्य च ब्राह्मणवधादे प्रतिपादनार्थो वेद ।

तस्याङ्गानि षट्—व्याकरणम्[2], शिक्षा, कल्पसूत्राणि, छन्दोविचितिः[3], ज्योतिषम्, निरुक्तञ्च ।

तत्र व्याकरणम्—अर्थविशेषाश्रयेण प्रकृत्यादिविभागेन साधुशब्दानन्वाचक्षाणं शब्दार्थप्रतिपादनेनोपयुज्यते । क्वचित्तु शब्दरूपप्रतिपादनेनैव[4] व्याकरणमुपयुज्यते ।

शिक्षा[5] तु—अध्ययन[6]काले कर्मणि च मन्त्राणां प्रयोगकाले द्रुतादिवर्ण[7]दोषैर्दुष्टस्य शब्दस्योच्चारणप्रतिपादनेनोपयुज्यते ।

कल्पसूत्राण्यपि—प्रतिशाखं शाखान्तराधीतेन[8] न्यायप्राप्त[9]रूपेण चाङ्गेनोपेतस्य प्रतिपन्न[10]स्य कर्मण. प्रतिपाद[11]नेन ।

छन्दोविचितिरपि—स्तोत्रादे[12]रङ्गत्वेन श्रुतस्य गायत्र्यादे[13]श्छन्दसो रूपप्रतिपादनेन ।

ज्योतिषमपि—दर्शपौर्णमा[14]साद्यङ्गभूतस्य पौर्णमास्यमावास्यादे. कालस्य स्वरूप[15]-प्रतिपादनेन[16] ।

निरुक्तं तु—मन्त्रार्थप्रतिपादनेनेति । एतद 'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न

---

१—विश्वेशं माधव ढुण्ढि दण्डपाणिश्च भैरवम् ।
वन्दे काशी गुहा गङ्गा भवानी मणिकर्णिकाम् ॥
माधवीयास्त्रयी धर्मशास्त्रोपनिषदात्मका ।
ग्रन्था मञ्जातरो ये च तच्छु (च्छु) खार्थं यतामहे ॥
इति पद्यद्वय ग्रन्थादावधिकं दृश्यते A

२—व्याकरणशीक्षा B C

३—'विचित्ति' नास्ति B C

४—'यथोभे प्रकृतौ हि द्विदेवत्येऽग्नीषोमीयपशौ अघस्तामित्येतदाम्नानम् । तस्य यदा विकृतावेक-देवत्ये बहुदेवत्ये च पशावहस्तदायत्तदूह्यते शब्द-रूपं तदघसदन्नित्येतद्व्याकरणमतरे ( मन्तरेण ) प्रकरण (?) न शक्य प्रतिपत्तुम् । एवमन्यत्रापि सर्वत्रोहे प्रवरनामधेयादौ च शब्दरूपप्रति-पादनेनैव' इत्यधिक पाठ B, C

५—शीक्षा B C

६—कालेऽपि B C

७—भूतादिवर्णदोषा ( द् ) B C

८—० धीतेनापि मन्त्रेण A

९—०प्राप्ति० B C

१०—निजशाखाप्रति० B C

११—प्रयोगरूपप्रति० A

१२—कर्मण स्तोत्रादे० B C
स्तोत्रशस्त्रादे० A

१३—छन्दोरूप० B C

१४—०पूर्ण० B C

१५—स्वरूपस्य A

१६—'उपयुज्यते' इत्यधिक पाठ B C,

विद्यते' (नि १ १५) इत्यत्र साक्षेपसमाधानं[1] वक्ष्यामः। तस्य निरुक्तस्य पञ्चाध्याया[2] 'गौर्ग्मा'-इत्यादयो[3] निघण्टवस्तेषां व्याख्यानार्थं षष्ठप्रभृति 'समाम्नायः समाम्नातः' (नि १ १) इति भगवतो[4] यास्कस्य भाष्यम्।

तस्य पूर्वटीकाकारैर्बर्बरस्वामिभगवद्दुर्गप्रभृतिभिर्विस्तरेण व्याख्यातस्य तद्वचनैकदेशानुच्चित्योच्चित्याल्पक्लेशेनाभ्याससिद्ध्यर्थमल्पग्रन्था[6] वृत्तिः क्रियते[7]।

समाम्नायः—समित्येकीभावे, आङ्-आभिमुख्ये, 'म्ना अभ्यासे'[8], एकत्र सम्भूयो[9]-ध्येतृभिर्वेदवादिभिराभिमुख्येनाभ्यस्यमानत्वात्[10]। समाम्नायशब्देनात्र गवादिर्देवपत्न्यन्तः[11] शब्दसमूह उच्यते, न वेदः[12]। समाम्नातः[13]—सम्भूयाभिमुख्येनाम्नातः[14] अभ्यस्तः। ग्रन्थीकृत्य पूर्वाचार्यैः पठित[15] इत्यर्थः।

स व्याख्यातव्यः—अर्हे कृत्यः[16]। व्याख्यानार्ह इत्यर्थः[17], मन्त्रार्थप्रतिपत्तेस्तदर्थज्ञान[18]-प्रतिबद्धत्वात्। यावद्धि मन्त्रेषु गवादीनां शब्दानां पृथिव्यादिरर्थो नावगम्यते[19] न तावन्मन्त्रार्थप्रतिपत्तिर्भवति। ज्ञाते तु भवत्येव। शिष्टानां शब्दानां प्रसिद्धत्वादेव[20]। अतो मन्त्रार्थप्रतिपत्तेस्तदर्थज्ञानप्रतिबद्धत्वात् स व्याख्यानार्हः।

तमिमं समाम्नायं निघण्टव इत्याचक्षते-पूर्वाचार्याः।

निघण्टवः[21] कस्मात्—एते गवादयः शब्दा पूर्वाचार्यैरुच्यन्ते[22]? उच्यते—

निगमा इमे भवन्ति—नियमेन मन्त्रार्थस्य गमयितार इत्यर्थः। यस्मा[23]-न्मन्त्रार्थप्रतिपत्तेस्तदर्थज्ञानप्रतिबद्धत्वात्तदर्थज्ञानार्थमेवैते[24] छन्दोभ्यः समाहृत्य समाहृत्य[25]

---

१—प्रतिसमा० B C
२—'पञ्चाध्या०' नास्ति B C
३—इत्येवमादयो B C
४—वदतो (?) A
५—व्याख्यास्यामि (?) B C.
६—०मभ्यर्चयग्रन्था (?) B C
७—लिख्यते B C
८—धातुपाठ, भ्वादि०, परस्मै०
९—सम्भूयैवा० B C
१०—वेदवदाभि० B C
११—०दिनवपत्स्यभृ B
१२—वेद B C
१३—०म्नातं B C
१४—'आम्नात.' नास्ति B C
१५—'पूर्वाचार्यैः पठित' इति त्रुटित B C
१६—कृत्यप्रत्यय' B C
१७—'इत्यर्थ.' इति त्रुटित A
१८—'०ज्ञान०' नास्ति A
१९—न ज्ञा वलिन ग ताव० (?) B C
२०—०देवार्थस्य B C
२१—'पुन' अधिक पाठ B C
२२—'निघण्टव' अधिक पाठ A
२३—'कस्मात्तदुच्यते' अधिक पाठ, A
२४—०मेते B C
२५—'समाहृत्य' नास्ति B C

समाम्नाताः ते निगमनान्निगन्तवो भवन्ति। तत[1]श्चैवं निगमनान्नि[2]गन्तव एव सन्तो निघण्टव उच्यन्[3]ते, वर्णव्याप[4]त्त्या पृषोदरादित्वाद्धि[5] गकार स्थाने घकार, तकारस्य टकार । ए[6]वमौपमन्यव आचार्यो मन्यते। स्तुत्यर्थश्चा[7]चार्यग्रह[8]णम्।

अपि वाऽऽहननादेव स्युः— अथवा यदेवैतदाहननं व[9]चनं पाठ इत्यर्थ । आङ्पूर्वो [10]हन्तिः पा[11]ठार्थ, एतस्मादेव निघण्टव एते स्यु, न निगमनात्। य[12]स्मात् समाहृ[13]ता भवन्ति। एकत्र सम्भूय वा पठि[14]ता इत्यर्थ । तथाहि-[15]ये ते मदा आवननवन्तो वचनवन्त इति निर्वचनमपि दृश्यते। क[16]थम्? नि[17]शब्दोऽत्र व्यत्ययेन आ इत्यस्य स्[18]थाने। दर्शयिष्यति भाष्यकार उपसर्गव्यत्ययम्-'निरित्येष समित्येतस्य स्थाने[18½]' इति[19]। घण्टुशब्दोऽपि घ्नन्ति[20] जघान जिघांसतीत्यादौ हन्तेर्हस्य घ[21]त्वापत्तिदर्शनाद्द हन्ते रूपम्, न गमे.।

यद्वा समाहृता भवन्ति। य[22]स्मादर्थज्ञानार्थं छन्दोभ्य समाहृता एते, य[23]तो वा समाहरणान्निघण्टव, नाहननादित्यर्थ । अस्मिन्पक्षे नि इत्येष सम्, आ इत्येतयोर्द्वयो स्थाने। घण्टुशब्दस्तु हरतेर्हका[24]ररेफयोर्घण[25]त्वापत्त्या तुशब्देन चौणादि[26]कप्रत्ययेन। एवमेतानि निघण्टुशब्दस्य त्रीणि निर्वचनानि।

अत्रेदं वक्तव्यम्—सर्वत्रैक[27]स्य शब्दस्य कथमनेकस्य निर्वचनस्य सम्भव ? किमर्थं

---

१–'निगन्तुशब्देन वक्तु शक्यन्त इत्यर्थ । गमिर्हि केवलोऽपि ण्यन्तार्थे शक्नोति वर्तितुम्, पञ्चभिर्हलै कृषतीति यथा । तु-शब्दस्त्वौणादिको गमे स्मर्यत एव 'सितनिगमिमसि' [उणा० १, ७०] इत्यादिना।' इत्यधिक पाठोऽत्र दृश्यते A
एतत्स्थाने 'नह्यस्तन्निति' एष पाठो दृश्यते B C
२–निगमन्त B C
३–'इति' अधिक पाठ A
४–०व्यावृत्त्या B C
५–०त्वात् गकारस्य स्थाने ङकारनकारयोश्च नकारभ (द) कारौ (?) B C
६–एवमेत्रोप० B C
७–०श्चाप्याचा० A
८–०'हणम्' इत्यारभ्य 'यदेवैत०' इत्यन्त पाठस्त्रुटित B C
९–'वचन' नास्ति B C
१०–'हन्ति' त्रुटित B C
११–"'सूत्र इदमाहतम्'। 'ब्राह्मण इदमाहतम्' इत्यादिप्रयोगदर्शनात् पाठार्थो वचनार्थ" इत्यत्राधिक पाठ A.
१२–यद्वा ते B C
१३–'एते' अधिक पाठ A
१४–'उक्ता' इत्यधिक. पाठ A
१५–एते B C N 4 15
१६–तत्कथम् ? B C
१७–नि शब्दो B C
१८–'स्थाने। दर्शयिष्यति' इति त्रुटित B C
१८½–N 12 7
१९–'नि' इत्यत्राधिक पाठ A
२०–घनन्ति B C
२१–०र्हकारस्य घकारत्वा० B C
२२–तस्मात् B C
२३–अतो B C
२४–०ते एकारस्य रेफयो B C
२५–घकारणकारापत्त्या B C
२६–०दिकेन B C
२७–सर्वस्य A.

वा तत्प्रदर्शन निघण्टुशब्दस्य ? 'तमिमं समाम्नायम्' इति संज्ञात्वकथनम्, तन्निर्वचन-प्रदर्शनञ्च किमर्थमिति ?

उच्यते—ईद[1] केषुचिच्छब्देषु धातुरूपमविनष्ट[2], तदभिधेया च क्रिया तदर्थेऽस्ति[3], यथा[4]–पाचकादिषु। तेषु[5] नैवानेकस्य निर्वचनस्य सम्भव। तथा च वक्ष्यति–'तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेना[6]न्वितौ स्यातां तथा तानि निर्ब्रूयात्' (२ १) इति। येषु तु धातोरक्षरमात्रं[7] वर्णमात्रं वा[8], यथा लक्ष्मीशब्दो[9] लभतेर्लक्षतेर्लब्धतेर्लषते-र्लसतेर्लज्ज्यतेश्च। तेष्वक्षरवर्णसामान्या[10]न्निर्वचनस्य कर्त्तव्यत्वात्तस्य चाक्षरस्य वर्णस्य वा सर्वेषु धातुषु सम्भवात्, सर्वेषा च तेषामभिधेयानां क्रियाणामर्थे सम्भवात्, अन्य-तमावधारणे च[11] कारणाभावादेकस्य शब्दस्यानेकनिर्वचनस्य सम्भव.। तत्प्रदर्शनञ्च–एतावतां धातूनामभिधेया क्रिया अयं शब्द प्रतिपादयितु समर्थ इत्येतस्य प्रतिपादनार्थम्। किमर्थमेतत् प्रतिपाद्यते ?

उच्यते—यत्र[12] शब्दोऽर्थान्तरे प्रयुज्यते। यथा–(नि ४।२५) अहेडमानो ररिवाँ[13] अजाश्वे'-ति (ऋ० १।१३८।४) अश्वशब्दोऽजेषु पठ्यते। 'उदु त्यं जातवेदसमि'ति जातवेद[14]श्शब्द सूर्ये। तत्र[15] यथा–'तैलं पानीय घृतं पानीयमि'ति पानीयशब्दो रूढ्यसम्भवात्[16] पातव्य-मिति पानक्रियां[17] प्रतिपादयन्नेकवाक्यतां[18] प्रतिपद्यते। एवमश्वादिशब्दोऽपि सर्वत्राश्नाशन[19]-क्रियामेव महाशनक्रियामेव वा प्रतिपादयति[20]। किं तर्हि ? या[21] यत्र वाक्ये[21] योग्या क्रिया

---

१–इह B C
२–०मपि नष्ट B C
३–तेऽस्तिरत्य (?) B C
४–तथा च वाचका० B
५–तेषा B C
६–विकारेणान्वितौ B C
७–'वर्णमात्र' नास्ति B C
८–वास्ति B C, 'वा' इत्यस्याग्रे 'अविनष्ट शिष्टं नष्टम्' इत्यधिक पाठ उपलभ्यते A
९–शब्दे B C
१०–'सामान्यादि'त्यारभ्य 'धातुषु सम्भवादि'त्यन्तस्य पाठस्य स्थाने 'सामान्येन सम्भवात्' इत्येतावानेव पाठ.। मध्यगत. पाठस्त्रुटित B C
११–'च' इत्यारभ्य 'तत्प्रदर्शनञ्च' इत्यन्त पाठस्त्रुटित B C
१२–यत्र स A
१३–वरुण B C.
१४–जातवेद A RV I 50 ]
१५–तत्र तत्र A
१६–रूढ्यर्थस्यासम्भ० B C
१७–'पान०' नास्ति B C
१८–०न्नेवाशक्यता C
१९–'न सर्वत्राध्वाशन०' इति पाठोऽत्र भाति।
२०–एतद्वाक्यस्थाने 'एव चाश्वादिशब्द, तासाञ्च न सर्वत्रैकमेवाध्वाशनमेव वा महाशनमेव वा' इत्येतावानेव पाठ। B C
२१–'या' 'वाक्ये' इति पदद्वय नास्ति B C.

क्वचिदन्नाशनम्[1] क्वचिन्महाशनम्[2], तां[3] तत्र प्रतिपादयन्[4] तदर्थमेव प्रतिपद्यते । एतावता धातूनामभिधेया क्रिया अयं शब्द[5]: प्रतिपादयतीति प्रतिपत्तव्यमिति निघण्टुशब्दस्य संज्ञात्वकथनम् ।

निर्वचनप्रदर्शनञ्च—अशङ्कितपर्यनुयोग[6]परिहारार्थम् । 'समाम्नायः समाम्नातः स व्याख्यातव्यः' इत्युक्तम् । तत्र पर्यनुयोग[7] आपद्यते[8]–'नायं व्याख्यातव्य । यदि व्याख्यातव्योऽभविष्यत् पूर्वाचार्यैरेवायं व्याख्यास्यत'[9] इति ।

अयं संज्ञात्वकथनेन तन्निर्वचनप्रदर्शनेन च परिहीयते व्याख्यात एवायं पूर्वाचार्यै[10] । तैर्ह्यस्य[11] निघण्टुरिति संज्ञा कृता । सा च निगन्तृत्वाहतत्व[12]समाहृतत्वानामन्यतमं प्रत्याययति । तस्मिन् प्रतीते निघण्टुशब्दा[13]र्थमकथितमपि[14] प्राज्ञ श्रोता स्वयमेव प्रतिपद्यते । यथा पथिज्ञे पथिज्ञेनाग्रतो गच्छताऽन्यतरस्मिन् पथि पुरुष[15] प्रकर[16]प्रक्षिप्तेऽपथिज्ञ पश्चादागच्छन् तद्दृष्ट्वा[17]ऽनेन पथा स[18] गतो मयाऽप्यनेन गन्तव्य[19]मिति प्रतिपद्यते[20], तद्वत् ।

कथं पुनरकथितं[21] गवादीनामर्थं[22] प्रतिपद्यते ?

उच्यते-सर्वस्य[23] हि श्रोतुर्न गवादय सर्व एवाप्रसिद्धा[24], अवश्यमेषां कस्यचित् कश्चित्[25] प्रसिद्ध पृथिव्यादिरर्थ । स तेन सहेतरान्[26] समाहृत्य समाम्नातान् पश्यन्निदं प्रतिपद्यते–'यादृशोऽयम्, नूनमितरेऽपि तादृशा एव । यत एतेन समाहृत्य समाम्नाता'

---

१–०द्न्वाशनं B C

२–'वा' इत्यत्राधिक. पाठ A

३–तान् B C

४–प्रतिपादयेत्, तदर्थमेतत् प्रतिपाद्यते B C

५–अत्र 'प्रतिपादयितु समर्थ । सामर्थ्ये सति या यत्र वाक्ये योग्या क्रिया ता तत्र' इत्येतावानधिक. पाठ A

६–अशंक पर्यनियोग B C

७–पर्यानियोग B C

८–आशङ्क्यते B C

९–एतद्वाक्यस्थाने–'तामाश्च या यत्र वाक्ये योग्यता एकत्र प्रतिपाद्यैरेव व्याख्यास्यतेति' एतावान् पाठ B C

१०–अत्र 'समाम्नात' इत्यधिक पाठ A

११–'तैर्हि' इति नास्ति A.

१२–निगमनसमाहतत्व B C

१३–गवादीना निघण्टुशब्दानामर्थं० A.

१४–०र्थं कथितमपि स्वय पृथक् कथितमपि B C अत्रोभयत्रापि 'अकथितमपि' इति नञ्घटित पाठ 'शब्दार्थम्' इति द्वितीयान्तपाठश्च भाति ।

१५–पुरुष' नास्ति A

१६–प्रकरे B C

१७–त दृष्ट्वा B C

१८–सह B C

१९–तथा गन्त० B C.

२०–अत्र 'निश्चित्याकथितमपि स्वयम्' इत्यधिक. पाठ उपलभ्यते A

२१–पुन कथितं (?) B C.

२२–०नाम प्रति० B.

२३–सर्वस्यापि B C.

२४–प्रसिद्धार्थमव० B C

२५–'कश्चित्' त्रुटित B C

२६–साहतारान् B. C.

इति । इदञ्च पृथिवीनामधेयं तस्मादितराण्यपि[1] पृथिवीनामधेयानीति[2] । एवं सर्वत्र नैघण्टुके तावत्प्रकरणे[3] तदर्थं प्रतिपद्यते । ये तावदनवगतसंस्कारा[4] निगमा जहादयस्तेषां[5] समाम्नाय-प्रयोजनं पर्य्येषमाणोऽक्षरवर्णसामान्येन[6][7] तदर्थं तस्य च मन्त्रवाक्यार्थे समवायसम्भवं प्रतीत्येदं प्रतिपद्यते—अनवगतसंस्कारप्रतिपादनार्थमेवैते[8] समाम्नाता इति । येऽप्यनेकार्था-दयत्यादयस्तेषामपि तत्र तत्र[9] मन्त्रवाक्ये तं तमर्थं प्रतीत्येदं[10] प्रतिपद्यत इत्यनेकार्थवृत्ति[11]-प्रतिपादनार्थमेवैते समाम्नाता इति । एवं संज्ञामात्रादू[12] गवादेर्देवपत्न्यन्तस्य समाम्नायस्यार्थ-मकथितमपि श्रोता स्वय प्रतिपद्यते । ततश्चैवं संज्ञां[13] कुर्वाद्भि पूर्वाचार्यैर्व्याख्यात एवायं समाम्नाय इत्यपर्यनुयोगोऽयम् ।

एव गवादिदेवपत्न्यन्तस्य[14] समाम्नायस्य व्याख्या प्रतिज्ञाता, संज्ञा च कथिता, तन्निर्वचनानि प्रदर्शितानि । इदानी स्वरूपं कथ्यते—तद्यान्येतानीति[15] । तदिति सर्वत्र वाक्योपन्यासे । यान्येतानि लोके चत्वारि पदजातानि[16] पदजातय पदसमूहा इत्यर्थ[17] । नामाख्यातेे चोपसर्गनिपाताश्च तानीमानि भवन्ति[18], तान्येवेमानि[19] गवादीनि देवपत्न्यन्तानि भवन्ति[20] । नापि[21] 'अ इ उण्' इति पाणिनीयप्रत्याहारसमाम्नायवत् मातृकावर्णसमाम्नायवच्च तेभ्योऽन्यानीति[22] गवादेर्देवपत्न्यन्तस्य समाम्नायस्य स्वरूपकथनम् ।

तत्रास्मिन्त्समाम्नाये गवादीनि नामानि, भ्राजत[23] इत्यादीन्याख्यातानीत्यस्य[24] विवे-कस्य प्रतिपत्त्यर्थम्, असमाम्नातानाञ्च नामाख्यातत्वप्रज्ञापनार्थमेतद्[25] वक्ष्यमाणम्—तत्रै-

१—०तरस्यापि B
२—०धेयान्येवेति B C
३—'प्रकरणे' त्रुटित B C
४—'नैगमेपि' इत्यत्राधिक पाठ उपलभ्यते A
५—'जहा' त्रुटित B C
६—'प्रयोजन पर्य्येषमाण' इति पाठस्त्रुटित B C
७—सामान्यमात्रेण B C
८—०नार्थमिके B
९—तन्त्र B
१०—अत्र 'देवपत्न्यन्तस्य समाम्नायस्यार्थमित्येतत्' इति पाठोऽधिक B C
११—'इत्यनेकार्थवृत्ति' एतस्य स्थाने 'एतत्' इति पाठ उपलभ्यते B C
१२—अस्य पाठस्य स्थाने 'स. व मात्र' इत्युपलभ्यते B C
१३—अत्र 'ततश्च सज्ञा कुर्वर्थि आचार्यैर्वा एवाय समाम्नायमित्य०' एतावान् पाठ. B C
१४—'एव' नास्ति, गवामादेर्देव० B
१५—तान्येता० B
१६—अत्र 'प्रसिद्धानि पदजातानि' इत्यधिक. पाठ उपलभ्यते A
१७—पदसमूहा. पदजातयो वा B C
१८—'तानीमानि भवन्ति' इति त्रुटित' B C.
१९—तान्येवमादीन्यपि B C
२०—'भवन्ति' नास्ति A.
२१—न B C.
२२—न तेभ्यो० B C, अत्र नकारोऽधिक एव प्रतीयते ।
२३—भजेत B C.
२४—०स्याविवे० B
२५—०प्र० इति नास्ति B. C.

तन्नामाख्यातयोर्लक्षणं[1] प्रदिशन्ति[2] ब्रुवन्ति ।

भावप्रधानमाख्यातम्—भाव क्रिया, तत्प्रधानमाख्यातम । आख्याते हि पचतीत्यादावुच्चारिते क्रिया प्रतीयते पाकादि । कालो वर्त्तमानादि । पुरुषः प्रथमादि[3], पचतीति पर, पचसीति युष्मदर्थ, पचामीत्यस्मदर्थ । उपग्रह –कर्त्तृगामि–परगामित्वलक्षण[4], 'स्वरितञितः'[5] ह्यात्मनेपद उच्चारिते 'ज्योतिष्टोमेन स्वर्गकामो यजेत[6]' इति कर्त्तृगामिफलत्वं प्रतीयते । परस्मैपदे तु[7] 'यजन्ति याजका' इति परगामिफलत्वम् । साधन कर्मादि[8], पचतीति कर्त्ता, पच्यत इति कर्म । सङ्ख्या–पचतीत्येकत्वम, पचत इति द्वित्वम्, पचन्तीति वहुत्वम्[9] । एषां क्रिया प्रधानभूता, गुणभूता इतरे तदर्थत्वात् ।

सत्त्वप्रधानानि नामानि[10]—नाम्नि हि पाचक इत्यादावुच्चारिते क्रिया प्रतीयते, कारकशक्तिश्च कर्त्तृत्वादि[11], तद्युक्तश्च द्रव्यम् । तत्र द्रव्यं प्रधानभूत[12] गुणभूते इतरे क्रियाकारकशक्ती, तदुपलक्षणार्थत्वात् । एवमेतत्पदावस्थायामर्थप्रतिपत्तौ[13] नामाख्यानयोरेकस्य भाव[14]-प्राधान्यमपरस्य[15] सत्त्वप्राधान्यमुक्तम्[16] ।

अथ[17] यत्रोभे तत्र कथम् ?

तद्यत्रोभे[18] इत्यादि । तदिति वाक्योपन्यासे, यत्रोभे-नामाख्याते देवदत्त पचतीति वाक्यावस्थायाम, यत्रेति श्रुतेस्तत्रेत्यध्याहार्यम, तत्र भावप्रधाने भवतः, भावस्य साध्यत्वात्, सत्त्वस्य च साधनत्वात्[19], साध्यसाधनयोश्च साध्यस्य प्राधान्यात् ।

किंरूपं पुनर्भाव[20] लोक आख्यातेनाचष्टे ?

---

१–'तन्त्रतन्' इति त्रुटित B C
२–प्रतिदिशन्ति A
३–'प्रथमादि.' इति त्रुटित, B C
४–०मिफललक्षणं B C
५–[ अष्टा० १।३।७२ ] अत्र 'स्वरित त्रिज्योभ्यात्मनद्यात्मनेपद उच्चरि०' इति पाठ, B
६–'स्वर्गकामो ज्योतिष्टोमेन यजेत' आपस्तम्बश्रौतमन्त्रम् १०२१ जैमिनीयन्यायमालाविस्तर ३.३ ३ पृ०१३९. ज्योतिष्टोमो यजु.सामवेदयोरस्ति तत्र किम् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येतद्वाक्य वेदद्वये समाम्नातम् ।' ताण्ड्यमहाब्राह्मणम् १६ १५ ५ पृ०३४२ स्वर्गकामो यजेत॥५॥शतपथ ब्राह्मणे त्वय पाठो नोपलभ्यते । ऋग्वेदभाष्योपोद्घाते ११ पृष्ठे सायणाचार्येणाप्युद्धृतोऽयंपाठः।
७–'तु' इति त्रुटित B C
८–'कर्मादि' इति त्रुटित B C
९–'पचन्तीति वहुत्वम्' इति पाठस्त्रुटित B
१०–'०ानि नामानि' इति त्रुटित. B
११–'कारकशक्तिश्च कर्त्तृत्वादि०' इति पाठस्त्रुटित B
१२–प्रधानं B C
१३–०मतप्र० B C
१४–प्राधा० A
१५–०रस्य त्वप्राधा० A.
१६–'उक्तम्' इति नास्ति B C
१७–अतो B C
१८–अत्र 'उच्यते' इत्यधिक पाठ B. C
१९–तत्साधन० B C
२०–०र्भाव B.

उच्यते—पूर्वापरीभूत भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्ग-पर्यन्तम् । क्रियायां व्यापारबाहुल्यात्[१] व्याख्यातॄणां विविधा प्रतिपत्तिः[२] । केचित्तावन्मन्यन्ते-ऽनित्या क्रिया, सा यथा व्यक्त्या आकृतिर्व्यज्यते[३] एवमधिश्रयणोदकासेचनतण्डुलावपना-[४]दिभिर्विभज्यते[५] । तदायत्तव्यक्तित्वाच्च तद्रूपैव[६] प्रतीयते । व्यक्ता सती फलमोदनादि साधय-तीति ।

अन्ये तु—उत्पाद्यते न[७] व्यज्यत इति मन्यन्ते । फलोत्पत्त्या चासावनुमीयते–उत्प-न्नेति, न[८] स्वय प्रत्यक्षग्राह्या[९] ।

अन्ये[१०] तु—तण्डुलविघटनलक्षणक्रियावयवादनन्तरमेवौदनादे[११] फलनिर्वृत्तिदर्श-नात् फलस्य निष्पादिका[१२] सा क्रिया ।

इतरे तु—अवयवा ये तण्डुलानामीषन्मृदुभावादयो[१३] ये चाधिश्रयणादयस्ते सर्वे तद-र्था, तादर्थ्याच्च यथा–'इन्द्र स्थूणा' इति स्थूणायामिन्द्ररूपमध्यस्यते, एवं तेषु क्रियारूप-[१४]मिति मन्यन्ते ।

अपरे तु—अधिश्रयणादीनामवयवक्रियाणां बुद्ध्या परिकल्पित समुदाय पचि-क्रिया[१५] इति मन्यन्ते । सा[१६] च यद्यप्यवयवक्रियाणामुत्पत्ते क्रमवर्त्तित्वा[१७]दुत्पत्त्यनन्तरमेव विनाशाद्यौगपद्यासम्भवाद् वस्तुरूपेण न सम्भवति[१८] तथापि क्रमेण गृहीतानामवयव-क्रियाणां बुद्ध्या परिकल्पित समुदाय पच्यादे· शब्दस्यार्थः, फलस्य च[१९] साधक ,प्रत्य-

१–'व्यापारबाहुल्यात्' इति त्रुटित B
२–प्रवृत्ति B C
३–आकृतिर्व्यक्त्या' इति विपर्यस्तः पाठ B
४–०श्रवणोदकन्येचन० B
५–व्यज्यते B
६–०त्वाच्चानित्यरूपै० A.
७-'न' इति त्रुटित B C
८–इइ स्वयं B C अत्र नञोऽपेक्षितत्वात्, कदाचित् 'नेह स्वय' इति पाठ स्यात् ।
९–तथा चोक्त भगवता पतञ्जलिना–'क्रिया नामेय-मत्यन्तापरिदृष्टा अशक्या पिण्डीभूता निदर्श-यितुम् । यथा गर्भो निर्लुठित.' १, ३. १, पृ० २५४.
१०–अन्येषा B. C
११–०न्तरमोदनादौ फलस्य B C.
१२–'फलस्य निष्पादिका' इति त्रुटित B C
१३–०मृदुभावाभावादयो B C.
१४–'०रूपमध्यस्यते । एव तेषु क्रिया०' इत्येतावान पाठस्त्रुटित । B C.
१५–पचतीति B C
१६–स च B
१७–क्रमत्वा० B C
१८–०पेणासम्भवी B C.
१९–०स्य त्वसा० B.

वयवक्रिय[1] फलावयवनिर्वृत्ते', सर्वेषु[2] दर्शनेष्वेकत्वात् क्रियायां न पौर्वापर्यमस्ति। ये तु व्यञ्जका वोत्पादका वा तदर्था वा[3] अवयवभूता वा अधिश्रयणादयस्तेषां पौर्वापर्यात् स्वयमपूर्वं न परञ्च[4] सन्तं पूर्वापरीभूत साध्यसाधनरूप भावं लोक आख्यातेनाचष्टे–व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्। व्रजनस्योपक्रम आद्यं पादविहरणम्। अपवर्गोऽन्त्यं[5] पदम्, यतोऽनन्तरा[6] ग्रामप्राप्ति। पचनस्योपक्रमो[7]ऽधिश्रयणम् अपवर्गोऽवस्रावणम्[8], अवस्रावितस्य[9] निष्पन्नस्य वा ओदनस्यावतारणम्।

**मूर्त्तं सत्त्वभूतं सत्त्वनामभिः**[10]—तमेव भाव मूर्त्तम्, मूर्त्तिर्घनीभाव[11] पिण्डीभवनमिति पर्याया'। पिण्डीभूतं व्यावृत्त[12]पूर्वापरीभाव सिद्धस्वरूप[13]मित्यर्थ। **सत्त्वभूतम्**—सत्त्वं द्रव्यम्, भूतशब्द पितृभूत[14] इत्यादिवदुपमायां द्रष्टव्य[15]। **सत्त्वनामभिः**—सत्त्वं द्रव्यं लिङ्गसंख्यायुक्तं वस्तु, तद्वचना शब्दा सत्त्वनामानि। तै कृदन्तैर्लोक आख्यातेनाचष्टे[16]–व्रज्या पक्तिरिति। वैयाकरणैरप्येतदुक्तम्–कृदभिहितो भावो द्रव्यवद्भवतीति[16a]। प्रसङ्गेन चेदमनाख्याते[17] कृदन्ते शब्दे रूपान्तरयुक्तस्य भावस्य[18] वचनस्य[19] प्रदर्शनम्।

**अद इत्ययं सत्त्वानामुपदेशः**—सत्त्वं द्रव्य लिङ्गसंख्यायुक्तं वस्तु' इत्युक्तम्। उपदिश्यतेऽनेनेत्युपदेश, लिङ्गसंख्यायुक्तानां वस्तूनां प्रतिनिर्देशक इत्यर्थ।

**गौरश्वः पुरुषो हस्तीति**[20], गौरश्व इत्यादयश्च ये विशेषास्तेषां सर्वेषां सत्त्वानां 'अद' इत्ययमुपदेश। गौरित्यादयस्तु केषाञ्चिदेव[21]। अद शब्दो हि विप्रकृष्टप्रतिनिर्देशार्थः[22]

---

१–क्रिया A
२–सवेष्वेषु B C
३–'तदर्था वा' त्रुटित' A
४–स्वरपूर्वमनवरञ्च B C अत्र कदाचित् 'स्वयमपूर्वमपरञ्च' इति युक्त पाठो भवेत्।
५–०र्गोऽस्त्ययेतो० B
६–अनन्तरं B C
७–ये वचस्येव क्रमो० B
८–'०स्रावणमव०' इति त्रुटित पाठ B
९–०स्यापि तस्यानिष्पन्नस्य चोदनस्यावनार B
१०–एप प्रतीको नास्ति B
११–मूर्त्त पिण्डीभूतमिति पर्याय B C
१२–व्यावृत्त B C
१३–सिद्धरूप० B C
१४–पुत्रभूत B C
१५–द्रव्यमिव B C
१६–आव प्रज्यापत्तिरिति B
१६[1]–महाभाष्यम् २ ? १ पृ० ४१७ बृहद्देवता १ ४५, क्रियाभिनिर्वृत्तिवशोपजात कृदन्तशब्दाभिहितो यदा स्यात्। संख्याविभक्त्यव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्य ॥
१७–चेदमाख्याते A
१८–'भावस्य' इति नास्ति B C
१९–वचनप्रदर्शनम् B C
२०–एष प्रतीको नास्ति B
२१–केषामेव B C
२२–विप्रकृष्टस्य B C

सर्वत्र विप्रकृष्टे वस्तुनि वर्त्तते[1]। सर्वेषाञ्च सर्वनाम्नां प्रदर्शनार्थमद् शब्दस्योपादानम्[2]। अन्यान्यपि हि-'त्यद्, तद्, यद्, इदम्' इत्येवमादिसर्वनामानि[3] सर्वत्र वस्तुनि वर्त्तन्ते, न क्वचिदेव। गौरश्व[4] इत्यादयस्तु क्वचिदेव वस्तुनि[5] गोत्वादौ वर्त्तन्ते न सर्वत्रेति।

भवतीति भावस्य—'उपदेश' इति शेषः[6]। आस्ते शेते इत्यादयश्च[7] विशेषा पूर्ववदेव। 'भवति' इति सर्वस्य[8] भावस्योपदेश। सर्वस्य भावस्य जायमानत्वात्, जायमानस्य च भवतीत्यनेनोपदेशात्। 'जायते उत्पद्यते निर्वर्त्तते' इत्यादीनां प्रदर्शनार्थं भवतीत्यस्योपादान पूर्ववत्। आस्ते इत्यादयस्तु-कस्यचिदेव भावस्योपदेशो[9] न सर्वस्य।

किमर्थं पुनरिदमुच्यते? उदाहरणार्थम्। 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'इत्युक्तम्, उदाहरणानि तु[10] नोक्तानि, तान्यनेन प्रकारेणोच्यन्ते। ननु भावस्य पुरस्तादेवोदाहरणे उक्ते[11] 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचति' इति, न तदुदाहरणार्थं वचनम्। किन्तर्हि? इहोदाहृतैर्व्रज्यादिभिर्यादृशो[12] भाव उच्यते पूर्वापरीभूत' उपक्रमप्रभृत्यपवर्गपर्यन्त, तादृशस्य प्रतिपादनार्थं तद्वचनम्।

अथवा यदिदमस्माभिर्दर्शितम्—अद् इति सत्त्वानामुपदेशो[13] गौरित्यादयस्तु कस्यचिदेव[14]। 'भवति' इति भावस्य सर्वस्योपदेश[15]। 'आस्ते' इत्यादयस्तु कस्यचिदेवेत्यस्य प्रतिपादनार्थमेतद्वचनम्।

अस्मिंस्तु व्याख्याने अद् इति सत्त्वानामुपदेश. सामान्येन, गौरश्व पुरुषो हस्तीति विशेषेण। भवतीति भावस्य सामान्येन, आस्ते शेते व्रजति तिष्ठतीति विशेषेण इति 'सामान्येन' 'विशेषेण' इत्येतौ[16] वाक्यशेषावध्याहार्यौ[17] जायेते। न चैतस्य[18] प्रतिपादने किञ्चिदस्ति प्रयोजनम्, अतोऽपव्याख्यानमेतत्।

---

१–'न क्वचिदेव' इत्यधिकोऽत्र पाठ B C
२–०स्येहोपा० B C
३–इत्यादीनि B C
४–'अश्व' इति नास्ति B
५–'वस्तुनि' इति नास्ति B C
६–'इति शेष' नास्ति B
७–अत्र 'एषामपि' इत्यधिक पाठ B C
८–सर्वभावस्य B C
९–०देशात् (?) A
१०–'तु' नास्ति B
११–०रण उक्त B
१२–व्रजति पचतीत्यादिभि' B C
१३–'सर्वेषाम्' इत्यत्राधिक पाठ B C
१४–अत्र 'भवन्तीति' इत्यधिक. पाठ' B C
१५–सर्वभावस्य B C
१६–'एतौ' नास्ति B
१७–अ याहर्त्तव्यौ B C
१८–चैकस्य B

अत परम्—'इन्द्रियनित्यं वचनम्'इत्यादि[1] रुक्तपदचतुष्ट्वाक्षेपप्रतिसमाधानार्थो ग्रन्थ । तस्यार्थ केचिदेव[2] व्याचक्षते–इन्द्रियं वागिन्द्रियं तत्र यन्नित्य नियतम्,अन्यत्र[3] नास्ति, तदिन्द्रियनित्यम, सप्तमी[4]'ति योगविभागात्समास । गृहनित्योऽध्ययननित्य इति यथा । यावद्वागिन्द्रियं तदुच्चारणे व्यापृतं[5] तावदेवास्ति[6], न तत[7] प्रागूर्ध्वमित्यर्थ । किन्तदिन्द्रियनित्यमित्यत आह[8]—वचनम् । उच्यतेऽनेनेति वचनं शब्द । एवमौदुम्बरायणो मन्यत इति वाक्यशेष[9] ।

एतदुक्तं भवति—वागिन्द्रियव्यापारादुच्चारणादनन्तरं शब्द उपलभ्यते, न तत प्रागूर्ध्वञ्च, तस्मात्तज्जन्य शब्द इति, अतस्तद्भावे[10] भावात्तदभावे चाभावात् । यथा कुलालव्यापारेण घट क्रियते, एवमुच्चारणेन शब्द[11]' क्रियते, नाभिव्यज्यते । कुत ? प्राक् सम्भवे[12] प्रमाणाभावात् । कृतकश्चोच्चारितप्रध्वंसित्वात्[13] न कालान्तरमवतिष्ठते । अत शब्दानां नास्ति यौगपद्यम्, युगपदवस्थितानेकार्थविषया चतुष्ट्वसंख्या, परस्परापेक्षे नैकस्मिन्वस्तु[14]नि द्वित्वादिसंख्यानां सर्वासां प्रवृत्ते । अत. 'चत्वारि पदजातानि' इति यदुक्तं, पदचतुष्ट्वं तन्नोपपद्यते ।

अस्य प्रतिसमाधानार्थमुक्तम्[15]—युगपदुत्पन्नानामित्यादि[16] । वाशब्दः पक्षव्यावृत्तौ । यदुक्तम्—'इन्द्रियनित्यत्वात्पदचतुष्ट्वानुपपत्ति.' इति, तन्न—युगपदुत्पन्नानामितरे[17]तरोपदेशः । कोऽस्यार्थ ? उच्यते—युगपदुत्पन्नानामित्युत्पत्त्या[18]'यो ह्युत्पद्यते स भवती'ति[19] सत्ता[20]लक्षणो भवत्यर्थो लभ्यते[21] । युगपदित्यनेनापि कार्येषु घटादिषु क्रमवृत्तित्वं दृष्ट

---

१–०त्यादि निरुक्त० A
२–'एव' नास्ति B C
३–स नास्ति B C
४–अष्टा० २।१।४०
५–व्याख्यात B C
६–'एव' नास्ति A
७–तत इति प्र र्वमि० B
८–' इन्द्रियनित्यमित्यत आह ' एतावान् पाठो नास्ति B C
९–शेष A
१०–' न तत ' इत्यारभ्य ' इति, अत ' इत्यन्तस्य पाठस्य स्थाने 'तत प्रागसत्' इत्येतावानेव पाठ उपलभ्यते B C
११–'शब्द' इति नास्ति B C
१२–सद्भावे B C
१३–इतश्चोच्चरितप्रध्वस्तत्वाच्च A
१४–नैतस्मिन् B अनेकस्मिन् इति पाठो भाति ।
१५–'प्रतिसमाधानम्' इत्येव पाठ B C.
१६–युगपदित्यादि B
१७–अत्र 'शब्दानामयम्' इत्यधिक पाठ' B C
१८–०त्त्याश्रयो B C
१९–अत्र 'भाव' इत्यधिक पाठ B C
२०–सकाल० B
२१–लक्ष्यते B C.

तन्निराक्रियते । तदभिधानमेतत्[1]-इतरेतरोपदेश इति । उपदेश उच्चारणम्-अभिव्यक्ति-रित्यर्थ । इतरेतरार्थत्वेनोपदेश.—इतरेतरोपदेश, अर्थविभागाश्रय[2]भेदे सति संप्रेक्षितार्थ-त्वादन्यान्यार्थत्वम्, केवलस्य प्रवृत्तिनिवृत्त्यनङ्गत्वात् । तेनैतदुक्तम्[3]—यौगपद्यवतां सता-मेव चतुर्णां नामादिपदजातानामेतत्परस्परार्थत्वेन वाक्यार्थप्रतिपत्त्यर्थमुच्चारणम् । अत[4]श्च युगपदवस्थितानेक[5]नामादिपदजातविषया चतुष्ट्वसंख्योपपन्ना । तदुपपत्तेश्चोपपन्नम्—'चत्वारि पदजातानि' इति ।

ननु[6] च प्रतिज्ञामात्रमिदं शब्दानां नित्यत्वे सत्येव कल्प्यते[7] । तच्च नित्यत्व[8]साध्यम् । पूर्वपक्षे हीन्द्रियनित्यत्वेन तद्भावभावित्वमुक्तं कथं प्रतिज्ञामात्रेण व्यवोढुं[9] शक्यम् ? उच्यते—अनत्यन्तगतिरेषा तद्भावभावित्वस्याभिव्यक्त्यापि[10] सम्भवात्[11] । तथाहि–युगप-दपवरकादिदेशव्यवस्थितानेकघटादिपदार्थाभिव्यक्तिरभिव्यञ्जकरत्नादिसन्निधौ दृष्टा[12],तद्व-दत्रापि भविष्यतीति[13] पूर्वोक्ततद्भावभावित्वे नाश्वास । तथाच–उपदेश उच्चारणमभि-व्यक्तिरित्युक्तं प्राक्[14] । अत. प्राक्प्रयोगात्[15] सतामेव शब्दानामभिव्यक्ति. प्रयोगेण क्रियत इति शब्दस्य प्राक्प्रयोगात् सद्भावे प्रयोगोत्तरकालं वाऽविनाशे[16] न्यायविद्भिरभियुक्तैस्ता-त्पर्येणोक्ता युक्तय. । इह तु तत एव किञ्चिदुच्चित्योच्चित्या[17]नुसन्धीयते—प्राक्प्रयोगात् सन्ति शब्दा, यदेना[18]ंस्तावत्येवार्थे[19] प्रत्ययनाङ्गत्वेन विद्वासो[20] विनियुञ्जते[21], न पुनस्तेषामज्ञाने घटपरश्वादीनामिव सलिलाहरण तद्वि[22] ? शरणार्थिन. समायास्यन्ति ।

---

१–तद्वदभिधानश्चैतत् B C
२–०श्रये भे० B
३–एतदुक्तम्भवति B C
४–ततश्च B C
५–'युगपदवस्थितानेक' इत्यस्य स्थाने 'युगपदप-वरकादिदेशव्यवस्थितानेकघटादिविषये च' इत्येतावान् पाठ उपलभ्यते B C
६–उच्यते B C
७–सत्त्व परिकल्प्यते B C
८–'नित्यत्व' नास्ति B C
९–व्यपोढु A
१०–०व्यक्तावपि B C
११–सद्भावात् B C
१२–दृष्ट्वा B C
१३–०ष्यति पूर्वोक्ते B C
१४–'प्राक्' नास्ति B. C.
१५–अतश्च प्राङ्ग योगात् B C
१६–चावि० B
१७–किञ्च मनागनु० A
१८–पदेना० C
१९–०स्तावन्त एव ज्ञात्वे वा० A
२०–'विद्वासो' नास्ति B C
२१–०षा भजने B C
२२–तरदपि B, C सलिलाहरणतरविश० इति पाठो भाति ।

किञ्चानित्यत्वे सति सम्बन्धस्य कर्त्तुमयोग्यत्वात्[1] यावदसौ करिष्यते तावच्छब्दकृतो नष्ट[2], अतः कथमसतां सम्बन्ध[3]। सम्बन्धश्च[4] नास्ति, आसीदिति चेत्कल्प्येत[5] ? तच्च न[6]। कथम् ? स ह्येको वा स्यादनेको[7] वा ? एकस्य दुर्गादिदेशेषु गमनानुपपत्ति। येन च शब्देन सम्बन्ध क्रियते, तस्य केन[8] कृत इत्यनवस्था। अनेकस्यापि सम्बन्धः परस्परसगत्यनुपपत्ति[10]। अनवस्था च तदवस्थैव[11]। हिरण्यगर्भादेश्च पुरुषातिशयस्य सम्बन्धशून्यस्य[12] च कालस्य[13] कल्पयितुमयोग्यत्वात्। तस्माद्वृद्धव्यवहारप्रसिद्धेरेव[14] सम्बन्धस्य परिज्ञानान्नित्यत्वसिद्धेरित्यनवद्यम्[15]।

प्रत्यभिज्ञानाच्च। प्रत्यभिज्ञायते हि—स एवायमिति। सादृश्यात् प्रत्यभिज्ञाप्रत्यय इति चेत् ? न तत्सदृश इति प्रतिपत्ति, किन्तर्हि ? स एवायमिति। तस्मात्सतामेव शब्दानां ताल्वादिकरणव्यापार, तज्जो वा नादोऽभिव्यञ्जक[16], यावदभिव्यञ्जकस्तावदभिव्यङ्ग्यस्योपलब्धिरिति सिद्धानां नामादिशब्दानां नित्यत्वाद्युगपदवस्थितानेकपदार्थविषया चतुष्ट्वसंख्येति। एतद्वस्तूरीकृत्य भाष्यकारेणोक्तम्[17]—'**युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः**' इति।

एतदुक्तं भवति—आक्षिप्तोपपत्तिक्रमे तत्प्रतिज्ञावचनमृषेरिति। तच्चोपरिष्टात्स्वयमपि[18] वक्ष्यति—**व्याप्तिमत्त्वादिति**।

**शास्त्रकृतो योगश्च**। च शब्द समुच्चये, न केवलं चतुष्ट्वम्, शास्त्रकृतश्चापिशले[19] पाणिनेर्वा[20] योग —सूत्रम्। समुदायाभिप्रायमेकवचनम्। योग समुदायोऽष्टाध्यायी शास्त्र-

१—०मशक्यत्वात् B. C.
२—'शब्दो विनष्ट' एतावानेव पाठ B C.
३—असता च कथ सम्बन्ध B. C.
४—'च' नास्ति B C
५—चेत्कल्प्य B. C.
६—'न' नास्ति C
७—सर्व्वको वा स्यादनेकोपादानको वा B
८—तेन B C.
९—अत्र 'सम्बन्धे' इति सप्तम्यन्तः पाठ. साधीयान् भाति।
१०—'स०' नास्ति C
११—'एव' नास्ति B. C.
१२—०न्धस्य शू० A.
१३—कामस्य B C.
१४—'०व' नास्ति C
१५—०ज्ञानानित्यत्वे सिद्धे इ० B. C.
१६—०दो हि व्य० B C
१७—'एतदूरीकृत्योक्तम्' इति पश्चात् कुतश्चिदापतित पाठ। B.
१८—स्वयमेव B
१९—०श्चावशक्ते. पणि० B.
२०—'०नेर्वा योग सूत्रम्, समुदायाभिप्रायमेकवच०' इति पाठो भ्रमाद् द्विधा लिखित. B.

मेवोपपद्यते,यदि[1] नित्या शब्दा । इतरथा हि प्रकृतावुत्पन्नायां[2] यावत्प्रत्यय उपादास्यते[3], तावद्विनष्टा[4] प्रकृतिरिति कस्य[5] केन[6] सम्बन्ध ।तथा च 'सिद्धे शब्दार्थसम्बन्धे'[7] इति तत्र प्रतिज्ञा ।

अथवा शास्त्रं[8] वेद, तेन कृतो योगो नित्यनैमित्तिककाम्यकर्मविषयोऽधिकृतपुरुषस्य नियोग । स च नित्यत्वे सत्युपपद्यते[9] । इतरथाऽनधिगतार्थसम्बन्धस्य[10] शब्दस्य नाशे किं केन युज्येत ।

अथवा 'दशम्यां व्यावहारिकीम्'[11] इत्यादि स्मृतिशास्त्रकृतो योग[12] । संज्ञाया संज्ञिना कुमारेण योग सम्बन्ध ।

अथवा शास्त्रेण[13] कृतो वाचो नित्यत्वेन योग[14],'वाचा विरूप नित्यया'[15]इति शास्त्रकृतो योग[16] । अस्मिंश्च व्याख्याने 'नित्यत्वे कारणम्' इति वाक्यशेषोऽध्याहार्य । न केवलं पूर्वोक्तं नित्यत्वे कारणम्, मन्त्रलिङ्गञ्चेत्यर्थ ।

किञ्च[17]—व्याप्तिमत्त्वात्तु शब्दस्य, 'नानुपलब्धि[18]रिति वाक्यशेष' । आशङ्कितचोद्योत्तरमेतदिति[19] । तुशब्दश्चार्थे[20]—व्याप्तिमत्त्वाच्चाणीयस्त्वाच्च[21] शब्दस्य सतोऽनुपलब्धि[22]रित्यर्थ । हेतौ वा । यदा हेतौ, तदा व्याप्तिमत्त्वं हेतुरणीयस्त्वं चेति सम्बन्ध. । क्वचिदनुपलब्धेर्याऽनित्यत्वाशङ्का, तां व्युदसितुं हेतुवचनम्[23] । 'व्याप्तिमान शब्द' आकृतिवत्सर्वगत' इत्यर्थ । तद्यथा—गवाकृतिर्न क्वचिदुपरतेत्यत. सर्वत्रोपरता भवति, पिण्डान्त-

१—यदि हि C.
२—०वुपपताया A.
३—उत्पद्यते B. C
४—विनष्टा तावत् B
५—तस्य B C.
६—सक्षय B.
७—पात०महा० १।१।१ सिद्धशब्दा सबल इति B
८—गाप्रवेद केन B.
९—स च सन्निकृष्ट उप० B C
१०—अनवगतार्थ० B. C
११—व्यावहारिक० B C आपस्तम्बीयधर्मसूत्रम् । २ ७ १६. १७ दशमे व्यवहारे रात्रि' । भारद्वाजगृह्यसूत्रम् । १ १६ दशम्या पुत्रस्य नाम दधाति ।
१२—'योग'' नास्ति B C
१३—मन्त्रार्थपाद' शास्त्रेण B C.
१४—नित्यत्वे नियोग B C.
१५—ऋग्वेद. ८।७५।६
१६—'शास्त्रकृतो योग ' इति नास्ति B C.
१७—'किञ्च' नास्ति B
१८—'अनुपलब्धि ' इत्येव पाठ. B. C
१९—'इति' नास्ति B.
२०—०श्चार्थ B C
२१—'०च्चाणी०' इति त्रुटित B. C.
२२—'सत ' नास्ति B C.
२३—अत्र 'हेतु:' इति नास्ति B. C.

रस्थोपलभ्यते[1]। एवं शब्दो व्याप्तिमान् सर्वगतश्च[2]। एतदुक्तम्भवति-शब्दस्य याऽनुपलब्धिर्नासावसत्त्वात्[3]। किन्तर्हि ? आकृतिवदभिव्यञ्जकाभावात्। अतो नानुपलब्धेरनित्यत्वमाशङ्कितव्यम्।

अणीयस्त्वाच्च[4]। च शब्दो वार्थे[5]। हेतुविकल्पत्वाय व्याप्तिमत्त्वादे[6]। क्वचिदनभिव्यक्ते सत एव शब्दस्यानुपलब्धि, अणीयस्त्वाद्वा। आकाशमणु=सूक्ष्मम्[7], अतस्त[8]द्गुणत्वाच्छब्दस्यातिशयेन सौक्ष्म्यादियमनुपलब्धि[9] सत एव। उपलब्धिस्तु प्रकाशे सति रूपस्येव चास्य ताल्वादिव्यापारसहकारिसद्भावे सति श्रोत्रेन्द्रियविषयापत्ते। अत आत्माकाशसामान्यादिवदनुत्पादविनाशधर्मे[10] शब्दो नियतोपायलब्धिश्चेति[11] सिद्धम्।

एवञ्च नित्यत्वे सति-शब्देन संज्ञाकरणं व्यवहारार्थं लोके। करणसाधन. संज्ञाशब्द। सक्षेपेण ज्ञायते ऽनयेति संज्ञा-देवदत्तो यज्ञदत्त इति। तस्या करणं कल्पनं[12] व्यवहारार्थं[13] व्यवहारप्रयोजनं लोके उपपन्नमिति वाक्यशेष।

अथवा शब्देनेति[14]—'संहतैर्नामादिपदै[15]र्ज्ञायते येन वाक्यार्थ' इति वाक्यमेव संज्ञाशब्देनोच्यते। तया करणं विवक्षितस्य प्रत्यायनम्। समानमन्यत्।

अथवा कर्मसाधन[16]-संक्षिप्तो ज्ञायत[17] इति वाक्यार्थ एव संज्ञाशब्देनोच्यते। तस्य करणं प्रतिपादनम्। केन[18] ? शब्देन वाक्यलक्षणेन। किमर्थम् ? व्यवहारार्थं लोके—

---

१—'न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति, द्रव्यान्तरस्था तूपलभ्यते' इति पातञ्जले महाभाष्ये (१।१।१) पाठ।

२—सर्वतस्ततश्च A.

३—०र्वासा० C

४—०स्त्वान्य B

५—वा चोऽर्थे A अत्र कदाचित् 'चो वाऽर्थे' इति पाठ स्यात्।

६—०या व्याप्तिमत्त्वात् B ०साय व्या० A

७—आकाशवत् सूक्ष्ममित्यर्थ B. C

८—तत० B. C.

९—०शयवत B C

१०—'विनाशधर्मे' इति पद त्रुटितम् A.

११—०तो वातपोपलब्धि० B C.

१२—'कल्पन' नास्ति A

१३—'व्यवहारार्थं' नास्ति B C

१४—'शब्देनेति' नास्ति A

१५—शब्दपदैः B. C

१६—अला कर्मसाधन B.

१७—जायत A

१८—तेन B. C.

वाक्यवाक्यार्थप्रतिपत्तिव्यतिरेकेण[1] हानोपादानोपेक्षालक्षणो[2] व्यवहारो वेदितव्य ।

अनन्तरव्याख्यानद्वये[3] चोद्यते—यद्यभिधानलक्षणो[4] व्यवहारो लोक[5] उपपन्नो नाम[6], मन्त्रेषु कथमुपपत्तिरिति ? उच्यते-'य एव[7] लौकिका शब्दास्त[8] एव वैदिकास्त एव चैषामर्था[9] ' इति न्यायादवस्थितमेतत् । अत उच्यते—

## तेषां मनुष्यवद्देवताभिधानम्

तेषां शब्दाना[10] यथा मनुष्येषु 'देवदत्त पय पिब, वच[11] शृणु' इत्यभिधानलक्षणो व्यवहार , एवं वेदेऽपि-'इन्द्र आगच्छ, पिब[12] सोमम्, शृणोत ग्रावाण ' इति यज्ञाङ्गदेवग्रावादिविषयाणा[13] नामादिशब्दाना व्यवहारो[14]ऽविशिष्ट । ननु यज्ञाङ्गदेवग्रावादिषु संबोधस्त[15]त्समर्थाचरणं वा न दृश्यते, ततश्चा[16]नर्थक्यमिति ? उच्यते-नैव[17] संबोधाद्यर्थतया तेषामुपदेश । किमर्थस्तर्हि ? उच्यते—

## पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे[18] ।

पुरुषाणां यजमानर्त्विजां विद्या[19] ज्ञानम्, तच्च प्रक्रान्तकर्मविषयेति[20]कर्त्तव्यतास्मरणलक्षणम् । तस्याऽनित्यत्वात् प्रस्मरणस्यापि[21] सम्भवादित्यर्थ[22] । नित्यत्वाद्वा नियतत्वादवश्यकर्त्तव्यत्वादित्यर्थ । अथवा-अनित्यत्वादनियतत्वादित्यर्थ[23] । पुरुषाणाञ्च विस्मरण-

---

१–अत्र 'च' इति वर्त्तते B.
२–हारोपा० A
३–व्याख्याद्वये B
४–यद्यवोन० B C
५–लोके व्यवहारB अत्र'उपपन्न'इति द्विवा लिखितम् B.
६–'नाम' इति नास्ति B
७–परे च A
८–'शब्दा ' इति नास्ति B
९–जैमिनीयन्यायमालाविस्तर १ ३ १० ३५ पृ० ३८. य एव लौकिका. पदार्था त एव वैदिका । तथा यानि लोके गवादिपदानि, तान्येव वेदेऽधीयमानानि, इति । .. पदैकत्वम् ।
१०–'तेषा शब्दाना' नास्ति A. C.
११–'वच:' नास्ति A. B.
१२–पिवेन्द्र B C.
१३–०वादिविषयो B C.
१४–व्यापारो B C
१५–सबोधन B C
१६–अतश्च B C
१७–नैव संवोधनाद्य० B C
१८–'कर्मसम्पत्तिर्मन्त्रो वेदे' इति त्रुटित. A.
१९–विज्ञानम् B C
२०–प्रक्रान्तविषये कर्मेति B C
२१–प्रस्मरणम्=विस्मरणम् । नाक्षराणि पठता किमपाठि प्रस्मृत. किमथवा पठितोऽपि । (नैषधे) ५ १२१
२२–'ऽनित्यत्वात् प्रस्मरणस्यापि सम्भवादित्यर्थ.' इत्येतावान् पाठो नास्ति A
२३–अथवेत्यारभ्येदं वाक्य नास्ति B. C.

स्यापि सम्भवात्, विशेषेण च प्रयोगसमये छिद्रान्वेषिपार्श्वसमवस्थितयाज्ञिककितवाभिभूतानाम्[1]। तथा च सति विगुणं कर्म स्यात्। ततश्च फलानवाप्ति[2]। तस्मात् क्रियमाणपदार्थविषयस्मरणवैगुण्ये[3] न कर्मपरिसमाप्त्या प्रयोजनम्[4]। ततश्च कर्त्तव्यम्[5]। तत्र चोपायान्तरेणापि स्मरणे प्राप्त उपायनियम इष्यते। तदर्थमाह—

कर्मसम्पत्तिर्मन्त्रो वेदे।

अवैगुण्येन कर्मण[6]: परिसमाप्ति =कर्मसम्पत्ति। तदर्थो मन्त्र कर्मसम्पत्तिशब्देनोच्यते, तादर्थ्यात्, 'इन्द्र स्थूणा' इति[7] यथा। एतदुक्तं भवति[8]—मन्त्रेणैवानुस्मृतं कर्म कर्त्तव्यम्, नोपायान्तरेणेत्येत[9]दर्थो मन्त्रो[10] वेदे।

अथवा—तेषां मनुष्यवदिति, विधिवाक्याभिप्रायम्[11]। यथा लोके नियोगार्थानि[12] वाक्यानि, एवं वेदेऽपि भवतु—विधायकेष्वेवमभिधायकेषु[13] मन्त्रेषु। कथमिति चेत्? पुरुषविद्यानित्यत्वात्[14], [15]पूर्ववद् ग्रन्थयोजना।

अथवा—तेषामित्यादिप्रतिज्ञावचनम्, पुरुषविद्यानित्यत्वादिति हेतुः। एतदुक्तं भवति—यथैवाप्तवचना[16]देवमिति विज्ञानमुपजायते, एवं वेदवाक्यादपि। तच्च सम्यक्। [17]कुत? तस्य विद्याशब्दवाच्यस्य वेदवाक्यहेतुकस्य विज्ञानस्य नित्यत्वाद्देशान्तरेष्वविपर्ययात्, कारकदोषाभावाच्चेत्यर्थ[18]। यथा च तत्प्रवृत्त्यङ्गञ्च, तथा[19] वैदिकमपि। अत स्वभा-

१—'पार्श्वसमवस्थितच्छिद्रान्वेषियाज्ञिककितवाभिभूतहृदयानाम्' इति पाठ B C
२—फलावाप्ति B C
३—क्रियमाण पदार्थविषय A
४—०माप्त्या तु प्रयोजनवत् B C
५—फलावाप्तये कर्मपरिसमाप्तिसाधनभूत किञ्चिदुपायान्तरमिति शेष।
६—'कर्मण' इति पदं त्रुटितम् A.
७—०त B.
८—'भवति' नास्ति B
९—'इति' नास्ति A
१०—मन्त्रे A
११—व्याख्या B विधिवचा० A
१२—०गान्तानि B C
१३—०भिधानेषु B C
१४—०द्याया अनि० A C
१५—अत्र 'नित्यत्व चेति' इत्यपि पाठ. B
१६—०वाप्ताभिधाना० B C
१७—सम्यक्कुत' B C
१८—तस्येत्यादिवाक्यस्थाने—'तच्च वेदवाक्यहेतु' (वाक्य हेतु?) तस्य पुरुषसम्बन्धिनो विद्यापुरुषवाच्यस्य नित्यत्वाद्देशान्तराविसंवादपि पर्यायात् करणदोषाभावाच्चेत्यर्थ' इति पाठ B C.
१९—यथा A.

[1]वेषु मन्त्रेषु कथमितिचेत् ? कर्मसम्पत्तिरित्यादि पूर्ववदेव[2] योज्यम् ।

अन्ये त्वन्यथा[3] व्याचक्षते[4]—इन्द्रिय एव नित्यं नियतं[5] वचनं शब्द , नार्थेऽभिधेये[6] । यतोऽसावुपायान्तरेणाप्यक्षिनिकोचादिना[7] परप्रतीतिपथमवतारयितुं शक्यते । ( एतावद्व-चनप्रयोजनम्, तच्चैत[8] ) दुपायान्तरेणापि सम्भवति । कोऽर्थो नामादिवचनगतसंख्यादिवि-[9]चारेण । अथ तत्र[10] क्रियते, अक्षिनिकोचादीनामपि[11] लक्षणे यत्न कस्मान्न[12] क्रियत[13] इति औदुम्बरायणो मन्यते । युगपदुत्पन्नानां वेति शब्दो विकल्पे । युगपदुत्पन्नानां वा, [14]न युगपदुत्पन्नानां वा आख्यातादीनां[15] शब्दानामितरेतर गुणप्रधानभावेनोपदेश. सख्यादि-वन्नोपपद्यत इत्यर्थ ।

एतदुक्तं भवति—निरुक्तव्याकरणाभ्यां परप्रतीतिशेषत्वेनावस्थितानां नामादि-शब्दानामर्थविशेषाश्रयेण[16] परप्रतीति. प्रतिपाद्यते । सा च प्रतीतिरन्यथा[17] व्यवकल्प्या,[18] ततो-ऽस्थानेऽयं[19] यत्न इति निरुक्तव्याकरणाक्षेपेण[20] पूर्व' पक्ष इति ।

व्याप्तिमत्त्वादित्यादि । 'तु' शब्द. पक्षव्यावृत्तौ । यदुक्तं तन्नोपपद्यत एव [21]नामादि पदचतुष्टादिविचारो व्याप्तिमत्त्वाच्छब्दस्य, सावधारणमेतद्द्रष्टव्यम्[22] । शब्दस्यैव[23] नियमेना-

१—स्वभावकेषु A.
२—'एव' नास्ति A.
३—नु यथा A
४—वा यति B C.
५—नियत B C
६—०ब्देनार्थोऽभि० B C
७—०प्यक्षणिकोदि० B C
८—एतद्वाक्य नास्ति B C
९—गतलक्ष (ण) सख्या B C
१०—नु B C
११—०ऽक्षणिको० B C
१२—'कस्मान्न' नास्ति B C
१३—क्रियेत B C.
१४—अयुगपदु० B C
१५—शब्दाना गवादीनामितरेतरगुणप्रधानभावेनो-पपन्नोपदेश , शास्त्रकृतश्च योग सख्यादि सनोपपद्यत इत्यर्थ B C
१६—०श्रयो विभाग प्रतिपा० B C
१७—परप्रतीति B C
१८—व्यकल्प्यत B C
१९—इत्यस्थाने B C
२०—रणयोराक्षेपे० B C
२१—नामादिगतश्चतुष्टादिविभागविचार' B C
२२—सामर्थ्यात्सावधा० B C
२३—तस्यैव B C

सन्देहेन विशेषेण प्रतिपिपादयिषितस्यार्थस्य[1] व्याप्ति· प्रत्यायनम्[2], तया व्याप्त्या तद्वा-ञ्च्छब्द एव[3], नाक्षिनिकोचादि[4]। स हि कदाचित्सन्देहेन[5] सामान्येन च कञ्चिदेवार्थ[6] कस्य-चिद्गमयेत्[7]। अतोऽस्माद्विशेषहेतोरुपपन्नो[8] नामादिगतो विचार, इतरेतरोपदेशः, शास्त्र-कृतश्च योगः।

किञ्चातिशयेन शब्दलक्षणस्यार्थप्रत्यायनोपायस्याणीयस्त्वात्सूक्ष्मत्वाल्लघुत्वादि[9]-त्यर्थ·। तेनैव शब्देन संज्ञानस्य[10] करणं व्यवहारार्थ[11]मर्थक्रियाप्रसिद्ध्यर्थं लोके, न वाक्षि[12]-निकोचादिभि, अनेकरूपत्वात्। तेषामेव[13] च मनुष्येष्विव[14] योऽक्षिनिकोचादीनामगो-चर स्वर्गापूर्वदेवतादि, तद्विषयमभिधानं प्रत्यायनसामर्थ्यम्। न च तद्विषयज्ञानं मिथ्या, प्रमातु' पुरुषस्य विधायास्त्रय्या·[15] प्रमाणस्य नित्यत्वादविपर्य्ययादित्युक्तम्।

भवतु विधायकेष्वेवम्, मन्त्रेषु कथमिति चेत्?

उच्यते—तेषामपीति[16]कर्त्तव्यतानुप्रवेशा[17]न्मन्त्रेणानुस्मृतं कर्म कर्त्तव्यम्। शास्त्रादि[18]-वचनादिष्वपि गुणगुण्यभिधान[19]मेषां कर्मसम्पत्तिः[20], तदर्थश्च मन्त्रो वेद इति पुरस्ताद्विस्त-रेणोक्तम्। एवञ्चेत्, युक्तो नामादिपदगतो विचार इति।

अपरे त्व[21]न्यथा व्याचक्षते—इन्द्रियं वागिन्द्रियं श्रोत्रेन्द्रियञ्च[22], तस्मिन्निसं नियतं

१–प्रतिपादार्थनुमेकस्यातिर्व्याप्ति B C
२–अत्र '०स्यार्थस्यातिर्व्याति' एष पाठ साधीयान् भाति।
३–'एव' नास्ति B C
४–नाक्षिकोचा० B
५–सन्देह B C
६–०न्येन कथञ्चि० A.
७–कस्यमिहमायत् B C
८–'अत' नास्ति B
९–अणुत्वात् A. ०स्त्वार्थक्षमत्वा० B C
१०–सम्यग्ज्ञानस्य B C
११–सव्यवहा० A.
१२–नाक्षिनि (क्षणि B) कोचादि. B C, मूले नवेति वाकारस्य स्थाने चकार साधीयान् भाति।
१३–किञ्च तेषा० B C
१४–०ष्विह वयो० B C
१५–०या मूर्या B ०स्त्रर्या' C
१६–तेषामिति B C
१७–०ताशोपनिपात्य मन्त्रे B C
१८–शास्त्रानुव० B C
१९–गुण्य इत्यभि० B C
२०–कर्मणास० B C
२१–'तु' इति नास्ति B C
२२–'च' इति त्रुटितम् B C.

सर्वदा भावि[1], तदिन्द्रियनित्यम् । किञ्च[2] तत् ? वचनम्, उच्यतेऽनेनेति वचनं[3] वाक्यम् । एवमौदुम्बरायणो मन्यते । एतदुक्तं भवति—प्रवृत्तिनिवृत्तिप्रतिपादनार्थं शब्दप्रयोगः[4] । ते च प्रवृत्तिनिवृत्ती वाक्येनैव[5] प्रतिपाद्येते[6] । अतएव[7] वक्तुर्वागिन्द्रिये वाक्यमेव नियतम्, श्रोतुश्च श्रोत्रेन्द्रिये[8] । वक्त्रा वाक्यमेव सर्वदा प्रयुज्यते, श्रोत्रा च प्रतीयत इत्यर्थः[9] । ततश्च वाक्यमेवास्ति[10], पदानि न[11] सन्ति । या तु वाक्ये पदबुद्धिः[12] सा निष्प्रयोजनत्वात्, पदानां[13] वक्त्राऽप्रयुयुक्षितत्वात्, श्रोत्रा चाशुश्रूषितत्वाद्[14] भ्रान्तिः । यथा—ब्राह्मणकम्बल इत्यत्र ब्राह्मणबुद्धिः[15] । यद्येवम्, तदा पदानामभावात् यदुक्तं पदचतुष्टं—चत्वारि पदजातानीति, तन्नोपपद्यते । तस्य[16] प्रतिसमाधानम्[17]—पदानि हि तत्र[18] वाक्येऽन्वयव्यतिरेकाभ्यामवगत-रूपाण्यवगतार्थानि च । तानि युगपत्प्रयुक्तानि वाक्यमित्युच्यते[19] । न[20] पदेभ्योऽन्यद्वाक्य-मस्ति । ततश्च तेषामुपपन्नं चतुष्टमिति ।

तत्कथम् ? न तावद्वाक्ये पदबुद्धिभ्रान्तिरिति शक्यं[21] कल्पयितुम् । विपर्ययस्य[22] कारणदोषस्य चाभावात् । तथाहि[23]—शुक्तिकायां रजतबुद्धेर्विपर्ययोऽस्ति, चन्द्रे च तैमिरि-[24]कस्य । द्वित्वबुद्धेः कारणदोषस्तिमिरम् । न चैवं[25] वाक्ये पदबुद्धेः । न च पदेभ्योऽन्यद्वा-क्यम्, अनुपलब्धेः । यथाहि पदादन्यत्पदान्तरमुपलभ्यते, नैवं पदेभ्यो वाक्यम् । न च

---

१—'भावि' इति पद त्रुटितम् A
२—'च' इति नास्ति B C
३—'उच्यतेऽनेनति वचनम्' इति पाठस्त्रुटितो भाति A
४—अत्र बहुवचनान्त पाठ B
५—'एव' नास्ति B ०वृत्तिवा० B C
६—०पाद्यन्ते B C
७—'एव' नास्ति A
८—श्रोतु च श्रोत्रेन्द्रिय B. C
९—'च' नास्ति B. C
१०—०क्यादेवा० B ०क्यऽेवा० C.
११—नैव B C.
१२—०बुद्धि C
१३—पादाना C
१४—चाप्रतीषितत्वाद् भ्रा० B C भ्रान्ति C
१५—०बुद्धि B.
१६—अस्य B C
१७—०धानपदा० A
१८—तत्र तत्र C
१९—०त्युन्यन्ते B. C.
२०—तेन A
२१—शक्यते A
२२—०र्ययेत्य B C.
२३—यथाहि A
२४—चन्द्रो च तैमितितस्य B C
२५—'च' नास्ति B. C

वाक्यार्थप्रत्ययस्यान्यथानुपपत्ते शक्यं कल्पयितुम्[1], पदार्थेभ्यस्तस्योपपत्ते । कथम् ? पदार्थसम्बन्धो हि वाक्यार्थ । पदानि च[2] पदान्तर[3]सम्बन्धाकाङ्क्षान् भेदसंसर्गरूपान्[4] स्वार्थान् प्रत्याययन्ति । तेषां सन्निधे[5]र्योग्यत्वाच्च सम्बन्धं[6] स्वयमेव[7] प्रतिपत्ता[8] प्रतिपद्यते । यथा—काष्ठभारमानीतं दृष्ट्वा[9] पार्श्वतश्च श्रान्तं[10] प्रस्विन्नं विपण्णं[11] मनुष्यं दृष्ट्वा[12] तयो सम्बन्धं प्रतिपद्यते—अयमनेनानीत इति, तद्वत्[13] ।

एवञ्चेत्पदार्थेभ्य एव वाक्यार्थप्रत्ययस्योपपत्ते[14]र्न वाक्यमस्ति, पदान्येव केवलानि सन्ति । ततस्तेषा[15]मुपपन्नं चतुष्टमिति, तदेतदाह—युगपदुत्पन्नानामित्यादिना[16] । वा शब्दोऽत्र पक्षव्यावृत्तौ । न विकल्पे । नैतदेवमित्यर्थ । युगपदुत्पन्नानामिति उत्पत्ति[17]-प्रयोगोऽभिप्रेत । शब्दा पदानीतरेतरोपदेश इति च चतुष्टमाह[18] तद्धीतरेतरस्योपदिश्यते, नैकस्य[19], परस्परापेक्षे नैकस्मिन् वस्तुनि द्वित्वादिकाया सख्याया प्रवृत्ते । युगपदेककालमुत्पन्नानां प्रयुक्तानां नामादि[20]शब्दाना[21]मितरेतरोपदेश । एतच्चतुष्टम् । तेभ्योऽन्यस्य वाक्यस्याभावादित्यर्थ. ।

किञ्च शास्त्रकृतो योग[22]श्चैवमेवोपपद्यते, यदि पदानि[23] सन्ति । अथ वाक्यमेव पर-

---

१—'यथार्ही' त्यारभ्य 'कल्पयितु' मित्यन्तस्य पाठस्य स्थाने 'पदेभ्यो वाक्य वाक्यार्थप्रत्ययस्यान्यथानुपपत्तेर्न शक्य कल्पयितुम्' एतावानेव पाठ उपलभ्यते B C अत्र 'अन्यत्' इति शेषो योज्य । अयं पाठ. साधीयान् भाति ।
२—'पदानि च' नास्ति C.
३—पदार्थान्तर B. C.
४—'भेदससर्गरूपान्' इति नास्ति B C
५—'सन्निधे' नास्ति B C
६—'सम्बन्ध' नास्ति B C.
७—अपि B. C
८—'प्रतिपत्ता' नास्ति A
९—०भारत (क C) मानीक त दृष्ट्वा B C
१०—'श्रान्तं' नास्ति B. C. सान्त A.
११—नि स्व A
१२—'दृष्ट्वा' नास्ति B C
१३—विद्वान् B C
१४—०क्याना प्रत्य० A
१५—ततश्च A
१६—०मित्येतदादिना B C
१७—उपपत्ति A
१८—चतुष्कमा० A
१९—तदितरस्योपदिश्यते, नैकस्यैव A.
२०—'नामादि' इति नास्ति B C.
२१—शब्दाना पदभूतानामि० B. C.
२२—योग चै० B C
२३—'वाक्यानि' B C.

मार्थं[1] सत्, न पदानि, तथासति केनापि[2] प्रकारेण पूर्वोक्तो न शास्त्रकृतो योग उपपद्यते ।

किञ्च व्याप्तिमत्त्वात्तु[3] शब्दस्य । तुशब्दश्चार्थे[4], शब्द[5] पदम् । व्याप्ति सामान्येना-[6]वस्थान तया तद्वान्, तस्मात्[7] पद्भूत शब्दो न वाक्यम्, तस्य विशेषवृत्तित्वात् । पदार्थ-प्रतीतिपुरस्सरश्च वाक्यार्थप्रत्यय इत्येतत्प्रतिपादनार्थमन्वयव्यतिरेकावेवोपन्यस्तौ[8] [9] व्याप्ति-मत्त्वादित्यनेन ।

एवञ्च सति सामान्येन[10] वर्त्तमानानां यो विशेषो[11] भेदसंसर्गरूप स वाक्यार्थ इत्यु-[12]पपद्यते । पदानाञ्चानर्थक्ये नियतावयवक्रमेणापूर्ववाक्येनार्थप्रत्ययो[13] न स्यात्, श्लोकादि-वाक्यवाक्यार्थसम्बन्धस्य[14] पूर्वमनुपलब्धे । वाक्ये[15] च पदानामानर्थक्ये वर्णवत्पदेष्विव[16] वाक्येपि क्रमनियम स्यात्, न चासाविष्ट ।

किञ्च अणीयस्त्वाच्च[17] पदेन हि पदार्थ सञ्ज्ञायत इति[18] लाघवम् । यस्य तु वाक्य-मेव, न पदानि[19], तस्य वाक्यार्थवत्पदार्थबोधोऽपि[20] वाक्येनैवेति गरिमा स्यात् । एकस्य चानेकार्थकल्पनायां न्यायविरोध[21] स्यात् । अत एव च[22] कारणाच्छब्देन पदभूतेनैव[23] संज्ञा-करणं व्यवहारार्थं लोके । वेदेऽप्येवमेवेत्याह-तेषां मनुष्यवदित्यादि समानं पूर्वेण ।

भावप्रधानमाख्यातमित्युक्तलक्षणस्याऽऽख्यातस्य, भवतीति भावस्येत्यादिना[24] च

---

१—परमार्थं सन् A
२—न केनचित् प्रकारेण पूर्वोक्तो न शब्दशास्त्रकृतो B C
३—'तु शब्दस्य' इति नास्ति B C
४—०र्थे, C ०ब्दार्थे B
५—शब्दपदम् B C
६—समोह्यवस्था० B. C.
७—'तस्मात्' इति त्रुटितम् A
८—'एतत्प्रतिपादनार्थ' इति नास्ति B C.
९—०पन्ये तौ C.
१०—सामान्ये B C.
११—विशेष उक्त ससर्ग० B. ०षोद्भेद० C.
१२—इत्येतदुपप० B. C.
१३—०णापूर्वेण वा० B C.
१४—'वाक्य' इति नास्ति A.
१५—न वाक्ये A. परमत्र नकारोऽसगतार्थ एव ।
१६—पदेष्वपि वाक्ये क्रम० B C.
१७—०यत्वाच्च C.
१८—सज्ञा यत्र इति वा म् B
१९—पदहि B C
२०—वाक्यार्थपदार्थावबो० B. C
२१—०यास्याय विरो० B. C
२२—'च' नास्ति B. C.
२३—'भूतेनैवे'त्यारभ्य 'भवतीति' इतिपर्यन्त पाठस्त्रुटित B C
२४—०स्यादिना B. स्यान्यादिना C.

प्रदर्शितोदाहरणस्य शेषतया किञ्चिद्वक्तव्यतामापन्नम्,तदुच्यते[1]–षड्भावविकारा[2] इत्यादि[3]। पाठादेव षट्त्वे[4] सिद्धे षडिति संख्याऽवधारणार्था–पडेवेति। तथा चावधारणस्य फलं[5] दर्शयिष्यति–'अतोऽन्ये' इतिना[6]। भावविकारा इत्यत्र व्याख्यातॄणां दर्शनभेदः। केचिन्मन्यन्ते–भाव क्रिया, तस्याश्च द्रव्यव्यतिरेकसद्भावो[7] द्रव्यगत[8]विकारदर्शनात्[9] तद्भावभावि[10]त्वेनानुमीयते[11]। कथम्? न तावद्द्रव्यमात्मानं विकर्तुमलम्[12], स्वात्मनि क्रियाविरोधात्। नाप्यसतो विकारकत्त्वम्। तस्माद्यतोऽसौ सापि[13] क्रियास्ति व्यतिरिक्ता[14] चेति। विकारशब्दश्च यद्यपि प्रकृतिविकारभावादिषु कार्यवचनो दृष्टः, तथापि सामर्थ्यादिह व्याख्याने प्रकारवचनो ग्राह्यः[15]। क्रियायाः क्रियां प्रति कारणत्वाभावात्[16], नहि[17] कर्म[18] कर्मसाध्यं[19] दृष्टम्। तेनैतदुक्तं भवति—क्रियाप्रकारा क्रियाभेदाः, ते चैतावन्तः[20] संभवन्ति। यथा–पञ्चप्रकार[21] कर्मेति वैशेषिका प्रत्यज्ञासिषु–"उत्क्षेपणमवक्षेपणमाकुञ्चनं[22] प्रसारणं गमनमिति कर्माणी"[23]ति। यत्तु भ्रमणविरेचनस्यन्दनादीनि[24], तदत्रैवान्तर्भवन्ति[25]। एवं पुन[26]-

१–अत्र 'स' इति A.

२–तमोपन्न थनाायते षत्यावेति विका० B

३–अत्र 'इत्यादिना' इति युक्तः पाठो भाति।

४–'षट्' इत्येव पाठ B C

५–ख्यातस्य भवतीति, प्रदर्श० B. C.

६–'इतिना' इति त्रुटितम् A.

७–द्रव्याद् व्य० B. C.

८–०सत्तादौ B ०सद्भावौ C.

९–०गति० A.

१०–०र्शनान्तदभाव० C.

११–नानुमितीयते B.

१२–विकस्तु० B. C

१३–'अपि' नास्ति B C.

१४–व्यतिरेका A

१५–०ख्यानैकवचनप्रकारो वचनो गृहीतव्य B C

१६–कार्यकारणभावाभावात् B. C

१७–'नहि' नास्ति C.

१८–'कर्म' नास्ति B, निकर्म C.

१९–"कर्म कर्मसाध्य न विद्यते" इति वैशेषिकसूत्रम्, १।१।११॥ 'कर्मसाध्य' नास्ति C

२०–०वन्तो भवन्ति B C

२१–०प्रकार C

२२–"उत्क्षेपणमवक्षेप आकुञ्चनमथापरम्। प्रसारण गतिरिति, कर्माणि " इति। A. पद्यमिद कुत्रत्यमिति न ज्ञायते, कदाचिदत्र स्वय टीकाकृतैव योजित स्यात्। न्यायकारिकावल्यामित्थमेका कारिका दृश्यते—
"उत्क्षेपणमथापक्षेपणमाकुञ्चन तथा, प्रसारण च गमन कर्माण्येतानि पञ्च च" ॥७॥

२३–वैशेषिकसूत्रम् १।१।७॥

२४–भ्रमणवावनादि B ०वावपनादि C

२५–भवति B C अन्तर्भावस्तु दर्शितो भाष्यकृता प्रशस्तपादेन–"गमनग्रहणाद् भ्रमणरेचनस्यन्दनोर्ध्वज्वलन. .. ...नादयो गमनविशेषा एव" इत्यादिना ग्रन्थेन।

२६–एव हे निरुक्ते B. C.

रुक्ताः षड्भेदा एतद्विशेषा इति वक्ष्यति। वार्ष्यायणिरित्याचार्यग्रहणं—न[1] स्वमतं[2] व्युद्सितुम्, किं तर्हि? उक्तस्यैवार्थस्य[3] दार्ढ्यार्थं मतान्तरस्यानुपन्यासात्[4]।

अन्ये मन्यन्ते—तथापि[5] कस्यचिद्भावस्याचिख्यासा[6] 'स्तम्भकुम्भादयो भावाः'[7] इत्यादिप्रयोगदर्शनाद् भावशब्द पदार्थपर्याय[8][9]। भावस्य पदार्थस्य वस्तुन एकरूपस्यैव सत[10] षड्विकारभेदा[11] भवन्ति, स्फटिकस्येव संसर्गिधर्मिभेदात्[12]। एतदुक्तं भवति–संसर्गिभिर्धर्मिभिरुपधीयमानं[13] वस्त्वेतावतीरवस्था[14] प्रतिपद्यत इति। अवश्य चैतदाश्रयितव्यम्[15], इतरथात्वभिन्ने[16] वस्तुनि जन्यादीनां[17] पर्यायत्वमभिन्नप्रत्ययग्राह्यता[18] च स्यात्[19]।

अन्ये च वर्णयन्ति[20]—भावशब्द[21] शब्दपर्यायः। तथाच प्रयोग[22]–यद्वा[23] 'सर्वे भावाः स्वेन भावेन भवन्ति[24], स तेषां भाव' इति, 'सर्वे शब्दा स्वेनार्थेनार्थभूता[25] संबद्धा[26] भवन्ति, स तेषां स्वभाव[27] इति तत्र व्याख्यायते। शब्दश्चात्रार्थवानाश्रीयते[28] वाक्यभूत, यतो न क्रियापदमन्तरेण प्रवृत्तिर्वा निवृत्तिर्वाख्यायते[29], सत्यानृतवचनविभागो वा[30], तथाहि 'अङ्कुरो' 'वन्ध्यासुत' इति चोक्ते यावन्न[31] प्रयुज्यते–अस्ति[32], नास्ति–इति वा भाव[33], तावन्न[34]

१–'न' नास्ति B C.
२–तस्य मतं B C
३–'कीत्यर्थ वा स्यात्' इत्यधिक पाठ A
४–मतान्तस्यानुमन्या A
५–अथापि B C
६–०पिख्यास B. C.
७–हर्षहावा B C.
८–०शब्दपदार्थे B.
९–पर्याय B. C
१०–वसत A.
११–०विकारा B C.
१२–ससर्गिविशे (षा) द्धर्मभेदात् B.
१३–०र्वमरूप विधीमान B.
१४–०अवस्था C.
१५–०तदेव श्रयतव्य B.
१६–इतराद्यभि० B C.
१७–जायस्या० B.
१८–०यतमभि० B
१९–०गाह्येतावस्यानि B.
२०–अन्ये वयन्ति B C
२१–हा शब्द B हा शब्द C
२२–०योगा' B.
२३–यथा A
२४–सन्ति A.
२५–'अर्थभूता.' नास्ति A
२६–सम्बन्धा C
२७–अत्र 'अर्थभाव' इति पाठो भाति।
२८–०त्रार्थाभिवान आ० B.
२९–प्रवृत्तिर्विवृत्तिर्व्याख्या० A.
३०–विदवन्यकुरो B
३१–यावन्त प्रयुज्यन्ते B C.
३२–'अस्ति' इति नास्ति A.
३३–'वा भावः' नास्ति B.
३४–यावत् B. यावन्त C.

किञ्चित्सत्यमनृतं[1] चोक्तं[2] भवतीति[3] । अतोऽनेन प्रकारेण वाक्यभूत' शब्दग्राम· षोढा-[4]ऽवस्थित कथ्यते । कथम्[5] ? सर्वत्रैव[6] ह्यङ्कुरादिशब्दप्रयोगे 'जायते' शब्दादीनामन्यतम आख्यातशब्द· प्रयुज्यते, यो वा तेष्वेवान्तर्भवति[7],अतो[8] व्यतिरेकेणाख्यातान्तरस्याभावात्[9] । अत· षड्भावस्य[10] शब्दस्य वाक्यभूतस्य[11] भेदा[12] इत्यर्थ ।

अन्येषां दर्शनम्—भाव -सत्ता महासामान्यम् । तथा च प्रयोग –'न द्रव्यं[13] न कर्म न[14] गुणो वा[15] भावः' इति । अत्र[16] द्रव्यादिव्यतिरिक्ता[17] सत्तेत्यर्थ[18] । सा च[19] सत्ता कैश्चित्पर-[20]मात्मत्वेनाध्यवसिता । 'स[21] एष महानात्मा सत्तालक्षणः'[22] 'तत्पर ब्रह्म'[23] इति ब्रह्मवादिभि' । सा चैकापि सती नित्यापि वाऽसत्यैः[24] शब्दमाहात्म्यनिबन्धनैर्व्यवहारानुवादिभि-[25] 'जायते' शब्दादिवाच्यैरवस्थाभेदैराविष्टे वाऽनुगते[26] वा कुटिलकुण्डलाद्यवस्था[27]भेदैरिव[28] पन्नग' स्तिमिततनु[29], स्थूलतरङ्गाद्यवस्थाभेदैरिव[30] महोदधि' सर्वानवस्थानवस्थाभ्यो[31] भेदा

१–न भव० A.
२–'इति' नास्ति B. C
३–मतो A
४–०ढामव० C
५–'कथम्' नास्ति A
६–०त्रेव A
७–भवन्ति A
८–अत एव B C.
९–आख्यान्तरस्य भावात् B
१०–भावस्य C
११–'भूत' नास्ति B C
१२–भेद C
१३–द्रवन्तत्कर्म B द्रव्य तत्कर्म C
१४–'न' नास्ति A B
१५–'वा' नास्ति B C
१६–'अत्र' नास्ति A
१७–०रिक्त A
१८–०त्यर्थे C
१९–सैव B
२०–परमार्थत्वेन कैश्चिदध्यवसीयते A
२१–य एष B
२२–०क्षणं A
२३–तद्ब्रह्म B C
२४–सत्ये B सत्यैः C
२५–नुपनुतिभि B
२६–०गतेव B
२७–०लवद्यव० B.
२८–'०द्यवस्था०' इत्यस्याग्रे 'भेदैराविष्टे वानुगतेव कुटिलकुण्डलवद्यवस्था' इति पाठो भ्रमाद् द्विधा लिखित. B
२९–स्मिमितिततनु. C
३०–०स्याविशेषे० B C
३१–सर्वथावस्थावानस्थाभ्यो B C वस्तुतस्त्वत्र 'सर्वावस्थानवस्थाभ्यो' इति 'सर्वथाऽवस्थानवस्थाभ्यो' इति वा पाठ साधीयान् भवेत् ।

[१]भेदाभ्यामनिर्वचनीय । सोऽय सत्तालक्षण[२] आत्मा[३]विस्तिरोभावधर्मेणानेकेनावस्थानेनानु-विद्धो जन्यादिभिरभिधेयत्वे[४]न विषयीक्रियत इति । एतदुक्तं भवति—[५]सर्वै शब्दैरेव सत्तालक्षण आत्मा[६]ऽभिधीयत[७] इति । त एते क्रियाया[८] वस्तुन शब्दस्य[९] सत्ताया[१०] वा भावस्य विकाराः । तांश्च संख्यया सामान्येन प्रदर्श्योदाहृत्य च[११] स्वरूपत एकैकं दर्शयितुमुपक्रमत इति प्रत्यवमर्शक[१२] 'एते' इत्यस्यार्थे[१३] ।

[१४]ज्ञायत इति [१५]पूर्वभावस्येत्यादि । इतिकरण [१६]पदार्थविपर्यासकृत् । [१७]सर्वपूर्वो भावो-[१८]ऽस्त्यादिभ्यो व्यापारान्तरेभ्यो जन्माख्य आदिरुपक्रमो बीजस्यैव[१९] [२०]मृदुभावादिरुच्छूनत्वं किञ्चिदुद्भिन्नत्वाद्यपवर्गान्तं[२१] पूवापरीभूतमाचष्टे 'जायते' शब्दः । [२२]शक्तिस्वाभाव्यात् ।

आह च—

“पूर्वामवस्थामजहत्[२३] संस्पृशन् धर्ममुत्तमम्[२४] ।
[२५]संमूर्च्छित इवार्था[२६]त्मा जायमानोऽभिधीयते[२७]” इति ॥

नापरभावमाचष्टे, जाताऽवस्थां नाचष्ट इत्यर्थ । स[२८] ह्यपरो[२९] भावोऽस्तेर्विषय[३०] इत्यर्थः ।

---

१—०वेदा० B C
२—०लक्षणे C
३—आत्मविस्तारो भावधर्मेणानेकेनावस्थाना विशेषेणाभेदेनानुविद्यो B C
४—जात्यादिभिरभिधेयानि त्वन B C
५—सर्व B C
६—'आत्मा' नास्ति B C.
७—इत्यभिधीयते B अत्यभिधीयते C
८—क्रियया A
९—'शब्द' इत्येवास्ति B C.
१०—सत्ता वा A
११—'च' नास्ति B C
१२—त्रत्यवमर्शे A
१३—'अस्यार्थे' इति नास्ति B C
१४—'जा' नास्ति B C
१५—'ताव' B C
१६—०करणपार्थ० B C
१७—सर्वस्य पूर्वो B C
१८—०वोऽस्तदिभ्यो B
१९—अत्र 'बीजस्येव' इति पाठः साधीयान् भवेत् ।
२०—बीजस्येषन्मदभावोच्चारणत्व B.
२१—०वर्गपर्यन्त B C
२२—अत्र 'शब्द' इत्यधिक. पाठ A
२३—०मजन्हतिसघ० C
२४—०मुत्तरम् A. धममुत्तमसे C.
२५—'समूर्च्छित' नास्ति C
२६—इवत्वात्मा B C
२७—[कुत्रत्योऽय पाठ इति न ज्ञायते]
२८—स C
२९—०परोज B C.
३०—०भाव अस्ते० B

नाम्ना च वृत्तौ जन्मानर्थक्यं स्यात्[1]।

**न प्रतिषेधति,** जनेस्तदर्थत्वादपरिसमाप्तिप्रसङ्गादनन्तरभावित्वाच्चायुक्तः प्रतिषेध इति।

अथवा सर्वेषामेव जन्यादीनामसतः[2] कर्तृत्वानुपपत्तेः पूर्वो भावः सत्तालक्षण आश्रीयते, तस्यादिरादानं स्वकारणैर्बीजादिभिरङ्कुरादिसत्तायाः[3] समावेशः[4] सम्बन्ध इत्यर्थः। तमाचष्टे[5]–अङ्कुरादेर्ह्यनुपचरितस्य[6] बुद्धिविषयां[7] जनिं प्रति कर्तृत्वमयोग्यम्। तथाऽसत्कार्य[8]वादिनः स्वकारणसत्तासमवायो जन्मेत्याहुः[9]।

**नापरभावमाचष्टे,** मुख्यसत्तां[10] नाचष्ट इत्यर्थः। परं पूर्ववद्योज्यम्।

अथवा पूर्वो भावोऽनभिव्यक्तः[11] सूक्ष्मा सत्ता, तस्या आदिरादानं विशेषै[12]स्तमाचष्टे। एतदुक्तं भवति[13]–सूक्ष्मसत्तासमाविष्टस्य[14] सतो विशेषप्रादुर्भावः। सतो[15] विशेषसत्ताप्रतिलम्भो जन्म। तस्मात्सदेवोत्पद्यते[16]। यदि ह्यसदुत्पद्येत[17], तन्तुभ्यो घटो मृदश्च पट उत्पद्येत। नत्वेतदेवं दृष्टम्, तस्मान्मृदवस्थायामेव घटोऽस्त्यनभिव्यक्तः पुरुषव्यापारेणाभिव्यक्तिर्नीयत[18] इति। तथा च[19] सत्कार्यवादिनः —

---

१–तत्र वृत्तजन्मानर्थ कस्यो B C
२–जन्मात्मभरणादीना० A
३–०जादिरङ्कु० B
४–समवेग B C
५–समाच० A
६–रुरादेर्हि प्रागनुप० A अत्रानुपचरितस्यानुपजनितस्यानुपजातस्येति वार्थः।
७–विषयया सत्तया जनिं B C.
८–तथा चासाकर्य० B C
९–नवमकारिकाव्याख्याने साङ्ख्यतत्त्वकौमुद्याम्–'उत्पत्तिः स्वकारणसमुदायो वा स्वसत्तासमवायो वा' इति, न्यायवार्तिकतात्पर्यटीकायाञ्च (४।१।५०) सूत्रव्याख्याने 'स्वकारणसमवायः सत्तासमवायो वा उत्पत्तिः' इति चाह षड्दर्शनटीकाकारो वाचस्पतिमिश्रः।
१०–मुख्यः सन् तान्नाचष्टे A
११–०नभिव्यक्त्या A
१२–'दि' इति त्रुटित B
१३–'भवति' इति नास्ति A
१४–सूक्ष्मा सत्ता समाविष्टास्य A
१५–अतो विशेषे सत्ताप्रतिमभो B C
१६–सदो मोत्पद्यते B C
१७–०त्पद्यत इत्येत तन्तुत्यो B C
१८–'०भिव्यक्तिं नीयत' इति युक्तः पाठः।
१९–तथाऽसत्का० B C वस्तुतस्तु 'सत्कार्य' इत्येव पाठो युज्यते।

"असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्[1] ।
शक्तस्य शक्यकरणात्कारणभावाच्च[2] सत्कार्यम्[3]" ॥

इत्याहु । नापरभावमाचष्टे, स्थूलसत्तां नाचष्ट[4] इत्युक्तार्थम्[5] ।

'अस्तीत्युत्पन्नस्य सत्वस्यावधारणम्' ।

उत्पन्नस्य[6] जनिव्यापारेण[7] प्रतिलब्धात्मलाभस्य जायमानावस्थां[8] प्रत्यनन्तरभाविन[9] सत्त्वस्य[10] द्रव्यस्य वस्तुनो[11] घटाङ्कुरादेर्निर्लुठितस्य बुद्ध्यावग्रहोऽवधारणं[12]'अस्ति'शब्द आचष्ट इत्यनुषङ्ग सर्वत्र । किं पुनरत्रावधारणम् ? अस्ति[13]=बिभर्त्यात्मानम्, न ध्वसत[14] इति, इत्थ बुद्ध्याध्यवसायः[15] । यद्वा पूर्वोत्तरावस्थातो[16] व्यवच्छेद', अङ्कुरोऽस्ति, न बीजावस्था[17], न नालपत्रकाण्डाद्यवस्था[18]। घट एवास्ति, न शिवकाद्यवस्था[19], न कपालाद्यवस्थेति[20] ।

विपरिणमत इत्यादि कर्मकर्त्तरि प्रयोग' । विपरिणमते[21] शब्दो जम्बूफल-पय आदे· र्धर्मिणो भूतभविष्यद्वर्त्तमानावस्थास्वेकत्वेना[22] श्रितस्याविनश्यत[23] आत्मतत्त्वाद्धरितत्वाद्द्रव[24]-त्वमाधुर्यादिनिवृत्त्या[25] कार्ष्ण्य[26]काठिन्याम्लत्वाद्युपजननेन[27] यो विकार' परिणामस्तमाचष्टे,

---

१—०कारणा० A
२—०कारणभा० A
३—[ साङ्ख्यकारिका ९ ]
४—'स्थूलसत्ता नाचष्ट' इति नास्ति B C
५—इत्याद्युक्तार्थं B
६—'सत्वस्यावधारणम्'। उत्पन्नस्य'इति नास्तिB C
७—०पारप्रति० B C
८—०नावस्थाप्रत्य० B C
९—प्रत्यन्तर० A
१०—सत्मस्य C
११—'वस्तुनो घटाङ्कुरादेर्नि०' इत्यस्य स्थाने 'पश्य घटान् (पशुघट C ) कुम्भकारादेर्द्रव्यभूतस्य' इति पाठ B C
१२—युक्त्यावगहे B C वस्तुतस्त्वत्र 'बुद्ध्यावग्रहे' इति युक्त पाठ ।
१३—'अस्ति' इति नास्ति B C
१४—ध्वस्वत C
१५—इत्यवुध्या० A
१६—यद्यपूर्वोत्तरानो A
१७—०वस्थान नालपत्रे A
१८—०काण्डमाद्य० B
१९—शिविका० A
२०—०पालद्यव सति B
२१—परिणमते A ष परिणमते B
२२—०मानास्त्वेक A
२३—०त्वेन विवक्षितस्याप्रचा (च्य) वमानस्याविनश्यत A
२४—०रितादवस्व B.
२५—०'निवृत्त्या' नास्ति B, C
२६—कात्स्न्र्य० A
२७—०कारिण्याम्लताद्यु० B कारिन्याक्काद्यु० C

तेन विशिष्टं तद्भिन्नं धर्मिणमाचष्ट इत्यर्थ । ननु तत्त्वादप्रच्युतिर्जम्ब्वामुपपद्यते,[1] पयसि कथम् ? यत्र पूर्वप्रख्योपमर्देन प्रख्यान्तरोपजनो[2] दधीत्युच्यते । अत्रापि शौक्ल्यादिविशिष्टं[3] गोरसद्रव्यं धर्मित्वेनाश्रयिष्यत[4] इत्यदोष.[5] । विपरिणमतेश्च विषयाविवेकप्रदर्शनार्थं[6][7] सर्वावस्थानुगतस्य धर्मिण आश्रयणम्[8] । धर्मिण्येव[9] हि[10] परिणाम सम्भवति न धर्मेषु, यतस्ते विनाशिजन्यस्तीना[11] विषयीभवन्ति । द्रवत्त्व विनशे.,[12] काठिन्यं च जने.,[13] शौक्ल्यगो-[14] रसते[15] अस्ते, अतो विविक्तो विषय[16] इति ।

वर्धत इत्यादि, वृद्धिरविवृतपरिणामविशेषस्य[17] धर्मिणः परिणामप्रकर्षविशेषाकाङ्क्षा[18] विषयस्याप्रच्यवमानस्य, तत्त्वप्रत्याख्यात[19] पूर्वावस्थाया[20] अभेदोपचारेण समवायिसंयो-ग्यर्थागमेन[21] य आभिमुख्येनोपर्युपचयस्तमाचष्ट[22] इति सम्बन्ध ।

**वर्धते शरीरेण वर्धते विजयेनेति,** क्रमाबाधेनोदाहरणपाठो युक्त ।

**अपक्षीयत** इत्यादि, एतेनैव विधिना[23] व्याख्यातं प्रतिलोमं वैपरीत्येनेत्यर्थ । पूर्व-

---

१–तत्त्व पृच्छति B

२–तत्र पूर्वप्रख्योपाख्योपमर्देन प्रख्योपख्यान्तरोपजनेत्युच्यते A अत्र मूले 'प्रख्यान्तरोपजननेन' इति तृतीयान्तपाठो युक्तो भाति ।

३–स्थौल्य० A

४–वर्मिणो नाश्रयिष्य B

५–०दोष B C.

६–विषयविषय वि० B

७–०र्शनार्थं B C

८–०श्रयिणम् B

९–अवर्मि० C

१०–च A

११–'ना' नास्ति C

१२–द्रवत्वाविनाशे B

१३–'च जने' इति त्रुटित B

१४–शौक्तियक्त्विय B. शौक्तिय C

१५–गौरसत्त्वे A

१६–विविक्ते विषया A

१७–०रनवयृतपरिमाण० B

१८–०णामापकर्ष० A अत्र '०णामोपकर्ष०' इति पाठो युक्तः ।

१९–तत्त्वाप्रख्यात B C अत्र 'तत्त्वप्रत्याख्यातपूर्वावस्थाया' इति समस्तपाठेऽर्थ सगच्छते । तथाहि-तत्तु वर्धत इति क्रियापद तु, अप्रत्याख्यातपूर्वावस्थाया-अप्रत्याख्याता अनिवारिता या पूर्वावस्था, तस्या अभेदोपचारेण तद्रूपतयैव पूर्वावस्थामविपर्यस्यन् योऽधिक उपचयोऽवयवान्तरप्राप्तिस्तमाचष्ट इत्यर्थ ।

२०–पुरुषावस्था० A

२१–'अर्थ' इति नास्ति B C.

२२–०पर्युपरि चय० B C

२३–वृद्धिना B C.

स्मादपकर्षापचयकृतो[1] विशेष.[2] । शेष पूर्ववत् । अन्यतराङ्गवैकल्याच्च विपरिणमतेर्वृद्धिक्षया-[3]वविषय इत्यपौनरुक्त्यम् ।

विनश्यतीत्यादि,[4] पूर्वो भाव सत्तेति पूर्वमुक्तम् । तस्या[5] विशेषादानं विशेषसत्ता-प्रतिलम्भो[6] जन्मेत्युक्तम् । तस्या एव विशेषैर्मोक्षो[7]ऽन्तस्तमाहेत्यत उक्तम्[8]—पूर्वभावस्यान्त-माचष्ट[9] इति । अपरभावं सत्तानां[10] नाचष्टे । न प्रतिषेधति, अव्यापारस्तत्रेत्यर्थ ।

अन्येषां[11] पाठ —अपरभावस्येति । अपरो भाव. सत्त्वेव, सन्नेव दिवि नाशमुपैति, तस्य सत्तालक्षणस्यापरभावस्यान्त स्वकारणप्रध्वंसस्तमाचष्टे[12] विनश्यति । नापर-भावमाचष्ट इति,[13] कपालावस्थां नाचष्टे । न[14] प्रतिषेधति—अव्यापारस्तत्रेत्यर्थ[15] ।

अन्येषां पाठ —न पूर्वभावमिति[16] । तेषां पूर्वो भावो विनश्यत्यपेक्षया[17]ऽपक्षीयति.[18], तन्नाचष्टे । विद्यमानमपि विनाशं[19] स्वांशोपनिपातित्वाच्छब्दानां न[20] प्रतिषेधति, स्वार्थो-परोधप्रसङ्गादिति ॥

जन्यादयो हि सत्तापेक्षया विशेषा, वक्ष्यमाण[21]पच्याद्यपेक्षया सामान्यरूपा[22] इत्ये-

---

१—०कर्षापचयपदकृतो A
२—'०शेष' इति त्रुटित भाति B C
३—'वि' इति नास्ति B
४—विनश्यतीत्यादिवाक्यस्य विविधान् पाठानाचार्यो महेश्वर' प्राचीनतमपुस्तकेषु पश्यति । तथाहि — 'विनश्यतीति पूर्वभावस्यान्तमाचष्टे नापर-भावमाचष्टे न प्रतिषेधति' इति प्रथमः, 'विनश्यतीत्यपरभावस्यान्तमाचष्टे नापरभाव-माचष्टे न प्रतिषेधति' इति द्वितीय', 'विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभाव-माचष्टे न प्रतिषेधति' इति तृतीयः । तत्राद्य पाठमाश्रित्य व्याख्या—पूर्वो भाव इत्यादि।
५—तस्यापि विशेषैरादा० A
६—०प्रतीतित्व सौ A
७—०र्विमोकेऽन्त. B C
८—'अत उक्तम्' नास्ति B.
९—माचष्टे इत्यारभ्य भावस्यान्त इत्यन्त पाठो नोपलभ्यते B C
१०—क्रियाणामित्यर्थ ।
११—द्वितीय पाठमाश्रित्येय व्याख्या ।
१२—०करण० A
१३—'इति' नास्ति B C
१४—'न' इति नास्ति B
१५—'इत्यर्थ.' इति नास्ति A
१६—'पूर्वभाव' इति 'इति'रहितः प्रथमान्त-पाठ. A
१७—विनाश्यपे० B विनश्यपे० C
१८—०पक्षति., तान्ना० A
१९—विनशौ C विनाशाभागोपनिपातित्या० B C
२०—'न' इति नास्ति B.
२१—यक्ष्य० A
२२—०भूता A.

तद्दर्शयितुमवधारणफलमाह[१]–अतोऽन्य इत्यादि । एभ्योऽन्ये[२] भावभेदा एतेषामेव षण्णां भेदा[३] इति ह स्माह वार्ष्यायणिरिति सम्बन्ध , प्रकृतत्वात् ।

ते यथावचनमभ्यूहितव्याः[४] । यथावचनम्–उच्यत इति वचनम्–अर्थ[५] । योग्यता-योग्यतायामव्ययीभाव[६] । यथायथमित्यर्थ[७] । ये यस्य जन्यादेरर्थत्वेन[८] योग्यास्त[९] आभिमुख्येन तर्कयितव्या । यथा[१०]–जनेरुत्पद्यते प्रसूयत उद्भवतीत्यादय[११] । एवमस्तेर्भवत्यादय[१२] , परिणमतेर्विक्रियत इत्यादय , वृद्धेरुपधीयते पुष्यत इत्यादय , अपक्षीयते शुष्यति ह्रसतीत्यादय , विनशेर्ध्वंसत[१३] इत्यादयो भेदा ।

अथवा यथावचनं यथावाक्यमित्यर्थ । यथा–ओदनं पचतीत्यत्रौदनस्य पक्तुमयोग्यत्वात् । यदि ह्यसौ[१४] पच्येतार्थान्तरमभिनिष्पद्येत । अतोऽत्र जनेरन्तर्हितण्यर्थस्य[१५] विशेष । तण्डुलं[१६] पचतीत्यत्र पचिर्विक्लिदेरन्तर्हितण्यर्थस्यार्थे[१७] । स[१८] च विशेदित्यर्थभूतस्यैव विक्लिद्यतो[१९] विक्लेदयति, विनश्यतो विनाशयतीत्यर्थ ।

एव नामाख्यातलक्षणं[२०] सप्रपञ्चमभिधायावसरप्राप्तानुपसर्गानर्थत स्वरूपतश्चोत्कर[२१]यितुमाह—न निर्बद्धा[२२] इत्यादिना । निराहुरित्यनेन[२३] सम्बन्ध । नि पृथगर्थे, बन्धि[२४]. प्रयो-

---

१–०फल त्वाह मतो० A
२–उक्तेभ्यो० B C
३–भावभेदा इत्याह A
४–'यथावचनमभ्यूहितव्या' नास्ति B C
५–अर्थ A अनर्थ B
६–'०योग्यता०' इति नास्ति A.
७–यथार्थमि० B C
८–०रर्थेन A
९–योग्यस्त B C
१०–तथा B ११–उत्थव० A
१२–एवमस्ते इत्यारभ्य ह्रसतीत्यादय इत्यन्त. पाठो नोपलभ्यते B C
१३–विनश्यतेर्ध्वस्यत A
१४–यप्यसौ पच्येतार्थमिति निष्प० A
१५–पचतेरन्तर्नीतण्य० B C
१६–तण्डुलान् C
१७–पचि. क्लिदेरन्तर्नीत० B C.
१८–परिविशेषान्तर्भूत तस्यैव B C अत्र मूले कदाचित् 'तस्य च विक्लित्यर्थभूतस्यैव' इति पाठो युक्त स्यात् ।
१९–०द्यतेरपि विक्ले० A
२०–०ख्यातयोर्ल० A
२१–तल्लक्षयितु० B C अत्र 'स्वरूपतश्चोल्लक्षयितु०' इति '०तश्च लक्षयितु०' इति वा पाठ साधीयान् भाति ।
२२–'निर्बन्धा इति' इत्येव 'न' रहितः पाठ. B C.
२३–नजाहिना सम्बध्यते B. C.
२४–बन्धः A.

गार्थे। उपेत्य नामाख्यातयोरर्थस्य विशेषं[1] सृजन्त्युत्पादयन्तीत्युपसर्गा। पृथक्प्रयुक्ता[2] उपसर्गा अर्थान्निश्चयेन नाहुः[3]। एव शाकटायनो वैयाकरणविशेषो[4] मन्यत इति वाक्य-शेष'।

किं तर्हि कुर्वन्ति? नामाख्यातयोरित्यादि। तुरवधारणे,[5] नामाख्यातयोरेव कर्मणोऽर्थस्योपसयुज्यत[6] इत्युपसयोगो विशेष प्रकर्षादिस्तस्य शब्दगडुमात्रेण[7] सन्निधा-नाद् द्योतका भवन्तीति।[8] कर्मोपसंयोगद्योतकाः—कर्मोपपदो नभस्य[9] स्वार्थिकः क। द्यो-त्यत इति वा द्योत, कर्मोपसयोगो द्योत्य[10] एषामिति बहुव्रीहि, तत कप्। अथवा कर्मो-पसयोगश्चासौ[11] द्योतकश्चेति समानाधिकरण., तं कारयतीति 'आतोऽनुपसर्गे[12] कः'[13] इति क। व्युत्पत्तिमात्रञ्चैतत्। अर्थसूक्त[14] एव न वाचक[15], किं तर्हि? शब्दोपजनमात्रेण पदान्तरोपात्तस्य विशिष्टस्य द्योतका इति। किमतो यद्येवमुच्यते? इह नामाख्यातयो-र्वाचकत्वे सति पृथक्प्रयोगत्वे च पदत्व दृष्टम। तद्वै[16]लक्षण्यादुपसर्गाणामपृथक्प्रयोगाद्[17]-वाचकत्वाच्चानर्थक्ये सत्यर्थविभागाश्रयस्य पदजातस्यानुपपत्तिरिति[18] वैय्याकरणदर्शनेन पृथक् पदार्थाक्षेप[19]। तथा च ते सामयिकपदत्वान्वाख्यानद्वारेण[20] निपातोपसर्गाणामपृथ-गर्थत्वात् सुबन्तपदमेव प्रतिजानते[21]। ततश्चोक्तपदचतुष्टानुपपत्तिरिति[22] पूर्व. पक्ष[23]।

---

१—'विशेष' नास्ति B C

२—'पृथक्प्रयुक्ता' इति पद 'उपेत्य' इत्यस्मात्प्रागेव लिखितम् B C

३—नाहुरिति B

४—'मन्यत इति वाक्यशेष' इति नास्ति A.

५—रव रणे B C.

६—०षस्य B C

७—शब्दग मात्रेण B. C

८—इत आरभ्य 'अथवा' इति पर्यन्तः पाठो नो-पलभ्यते A

९—अय सदिग्ध पाठ.।

१०—अत्र 'द्योत' इति युक्तः पाठ.।

११—०पसग्रह० A.

१२—आहो० A.

१३—अष्टाध्यायी ३।२।३॥ 'क.' नास्ति B

१४—अस्तसूक्त B.

१५—वाचक' इत्यारभ्य विशिष्ट इत्यन्त पाठो नोपलभ्यते B तत्र 'न वार्थस्य द्योतका' इत्येव पाठ।

१६—'तद्' नास्ति A.

१७—०ण्याद्युप० A

१८—०जातस्वस्या० B C

१९—रदत्वाक्षेप. A

२०—तेषामपिकप० A.

२१—प्रतिजानत B. C अत्र 'प्रतिजानते' इत्येव पाठो युक्त'।

२२—तत्रश्चोरक्त० B. C.

२३—पूर्वपक्षः B

उच्चावचा इत्यादि। उच्चावचा बहुप्रकारा पदस्योपसर्गाख्यस्यार्था[1] अभिधेया प्रकर्षादय सन्ति। अथवा[2] नामाख्यातानां[3] पदानामर्था उपसर्गानुवर्त्तित्वे सत्युच्चावचा गम्यन्ते। एवं[4] गार्ग्यो नाम नैरुक्तविशेष आहेति वाक्यशेषः[5]। किं शब्दाधिक्यात्? नेत्याह, तद्भावाभावित्वेनान्वयव्यतिरेकाभ्यां[6] प्रकृत्यादिवदर्थविशेषस्य[7] प्रतीते, शब्द-शक्तिस्वाभाव्याच्च[8], नामाख्यातानुवर्त्तित्वेनैव प्रयुक्तानां[9] प्रकर्षाद्यर्थविशेषप्रबोधसामर्थ्य-मुद्भवति, न केवलप्रयोगे[10]। अत[11] प्रकृत्यादिवदेव केवलानामप्रयोग। नत्वेतावतानर्थक्य-मेवाध्यवसातुं[12] युक्तम्। अपि च यत्र केवलादप्यर्थप्रतीतिर्दृश्यते[13], तत्र केवलस्यापि[14] प्रयोग। 'यदुद्वतो निवतो[15] यासि निष्कौशाम्बिरि'ति। आनर्थक्ये हि सति[16] तद्धितसमासौ[17][18] न स्याताम्। अभ्युपगम्यैतत्सामर्थ्यं[19] पदकार आह–'उपसर्गाश्च पुनरेवमात्मका, यत्र क्रिया-वाची[20] शब्द. प्रयुज्यते तत्र क्रियाविशेषमाहु'। यत्र तु न[21] प्रयुज्यते, तत्र[22] ससाधनां क्रिया माहुरिति' इति[23]। अतो वैयाकरणा[24] अपि पार्थगर्त्यं[25] नैव निन्हुवे[26]। सुबन्तपदत्वन्तु यत्सा-मान्येन, तत्स्वप्रक्रियाप्रसिद्ध्यर्थम्[27][28]। अत[29] एवं पृथगर्थत्वं बुद्ध्वाऽऽह[30]। तद्य एषु पदार्थ

१–०दिधेवा C
२–अथ. C
३–०ख्यातव्य A ०ख्यातानार्थ C. 'पदानाम०' नास्ति B C
४–स एव B. C.
५–वाक्यविशेष B
६–क तत्कालभावि० B
७–प्रकृतिप्रत्ययादि० B C
८–शक्तिस्वभावाच्च A.
९–प्रयुक्तत्वाना C
१०–केवल A
११–च्युत' A
१२–०सातु B. C
१३–०प्यत्र० A
१४–तस्य केवलोऽपि B. C
१५–निरवतो B. C. [ Cf ऋ० ३।२।१० ]
१६–भवति B C
१७–'तद्धित०' इति नास्ति B C
१८–०समासो A
१९–०गम्य वेगमर्थ A
२०–०वाचिशब्द. B
२१–तत्र न B C
२२–'तत्र' इति पदमित उच्चित्य 'ससाधना' इत्य-स्याग्रे लिखितम् B C
२३–'इति' नास्ति A
२४–०णैरपि वाच्यम्, नैव निम्यूयत B. C
२५–'पार्थगर्थ्यं' इति युक्त पाठ।
२६–'निन्हुवते' इति युक्त पाठ।
२७–तत्स्वप्रदुक्रि० B C.
२८–प्रसिद्धमेव B C
२९–'अत' इति नास्ति B C
३०–'उभयथा प्रयोगसिद्धि' इत्यधिक पाठ A,

इत्यादि[1]। तस्माद्[2] एषु पदेषूपसर्गेषु[3] नामाख्यातेषु वा प्रयुज्यमानेषु पदार्थ[4] प्रकर्षादिरर्थः प्रतीयते, प्राहुरिमे-उपसर्गास्तमीदृशं नामाख्यातयोरर्थस्य विशेषणम्[5]। 'कृत्यल्युटो बहुलम्'[6], इति कर्त्तरि ल्युट् करणे वा, विकारकमित्यर्थ[7]। स च क्रियाया[8] क्वचित् कदाचिद्वशिष्टाया[9] विशेषक, पचति प्रपचतीति। क्वचिन्निवृत्तिधर्मविशिष्टाया प्रवृत्तिधर्मकत्वम्-तिष्ठति प्रतिष्ठत इति। क्वचिदनुवादित्वम्-लम्बते प्रलम्बत[10] इति। अन्ये तु[11] न निर्बद्धा इत्यादिना द्योतकत्ववाचकत्व[12]विषयामाचार्यविप्रतिपत्ति समर्थयन्ते।

प्राहुरित्युक्त[13] सामान्येन, विशेषेण वर्णयितु[14]मुपक्रमते-आ इत्यादि। अर्वागर्थः सन्निकृष्ट[15], अत्र युक्ता[16] हि कर्मत्वेन[17] सर्वत्र द्वितीया, प्रदर्शनं चेदम्[18], कर्मप्रवचनीयत्वे हि सति-'आ समुद्रादपरात्'[19], इत्यादौ मर्यादादिष्वपि[20] दर्शनात्, निपातत्वे च समुच्चयादिष्वपि। अर्वागर्थ उदाहरणम्-'परा याहि मघवन्[21]-रासभस्य'[22], विश्वामित्र इन्द्रमाह[23]। अस्मिन् यज्ञे[24] सोमस्य[25] तृप्त सन् परा[26] पराचीनं रन्तुं[27] स्वगृहमेव याहि। हे मघवन् धनवन्[28] पुनश्च श्वो[29] यागकाले[30] सोमं पातुमर्वाक् सन्निकृष्टमस्मद्यज्ञ[31]मुत्तरवेदिदेशं याहि।

---

१-एष प्रतीको नास्ति A.
२-कस्मा० B C
३-'उपसर्गेषु' नास्ति B C
४-'पदार्थ' नास्ति B. C.
५-विकरण B C
६-[ अष्टाध्यायी ३।३।११३]
७-विकारिकविशेषक० B C
८-क्रियायाम् C
९-०दपि चेष्टाया B ०दविशेष्टाया C
१०-'प्रलम्बत' इति नास्ति B
११-अन्ये त्वनिवन्वा B त्वनिबद्धा C
१२-'०वाचकत्व०' इति नास्ति B C
१३-उक्तेन B उक्तैन C
१४-तु दर्शितुमाह A 'दर्शयितु०' इति पाठो युक्त स्यात्।
१५-०गर्थ सन्निकर्ष B ०गर्थ सन्निकर्म C
१६-अनुषक्ता ह (हि) A
१७-कर्मार्थेन B
१८-०र्शन त्वेदम् B C
१९-आक्षमुद्रादवरात् A. [ Cf ऋ० ७।६।७ ]
२०-मर्य्यादा० A
२१-'मघवन्' नास्ति A
२२-[ ऋ० ३।५३।५ ] २३-इदमाह A.
२४-अस्मद्यज्ञे B अस्माद्यज्ञे C
२५-सोमेन B C वर्त्तमानार्थक्तान्ततृप्तपदयोगे 'क्तस्य च वर्त्तमाने' (अष्टा० २।३।६७) इति षष्ठ्येव युक्ता।
२६-परा च B C
२७-'रन्तु' नास्ति B C
२८-'धनवन्' नास्ति A
२९-'श्वो' नास्ति B C
३०-योग० A. ३१-०स्मद्ये द उत्त० B C

कस्मात्पुनरेवमुच्यते[1]–'आ च परा च याही'ति[1½]। उच्यते[2]–यस्मात् हे इन्द्र भ्रात' सोमप-यश्चरुपुरोडाशादिना भर्त्तव्य[3], उभयत्र स्वगृहे[4]ऽस्मदीये यज्ञे[5] च। ते–तव, अर्थ[6]–व्यत्ययेन प्रथमार्थे द्वितीया–अर्थ[7] प्रयोजनमित्यर्थ। एकत्र सोमोऽन्यत्र शच्यादिपरिभोग[8]। कीदृशं स्वगृहम्[9] ? यत्र रथस्य बृहतो महतो निधानं स्थानं[10] यजनशालाख्यं विमोचनं विमोचनस्थानं[11] च मन्दुराख्यं वाजिनोऽश्वस्य, कीदृशस्य ? रासभस्य जात्यन्तरत्वद्विशेषणं यथाश्रुतं न सम्भवतीति सकारभकारयो[12]र्व्यत्ययेन रभसशब्दाद्वेग[13]वचनात्[14] 'सर्वे विधयश्छन्दसि विकल्प्यन्ते[15]' इति मत्वर्थीयो न दृश्य[16]। रासभस्य वेगवत इत्यर्थ.।

प्रपरे[17]त्येतस्य प्रातिलोम्यम्। एतस्यैव सन्निकर्ष[18]लक्षणस्यार्वागर्थस्य प्रातिलोम्यं विप्रकर्षमाहतु। प्रशब्दस्योदाहरणम्[19]–'अरण्यान्यरण्यानी'[20]ति चतुर्दशे व्याख्यास्यते। पराशब्दस्य 'परा याहि' इति पुरस्ताद्व्याख्यातम्[21]।

अभीत्याभिमुख्यम्[22]। अभिमुखता[23] प्रह्वता[24]। उदाहरणप्रचुरम्[25]। अथापि[26] तु[27] किञ्चित्प्रदर्श्यते[28]–'अभित्वा देवमवित[29]:–मीमहे[30]'। शून शेपो[31] यूपेऽवनद्ध[32] सवितारमायु.

१–कस्मादेवमुन्यसे A
१½–[ Cf ऋ० १।१६४।३१, १०।१७।६ ]
२–'उन्यते' नास्ति A
३–सोमपानाय सुपुरोडाशादीना भर्त्त A
४–'स्व०' इति नास्ति A
५–'यज्ञे' नास्ति B C
६–अर्थ B C. ७–अर्थ B C
८–शय्यासनादिपरि० A.
९–'स्व०' इति नास्ति A
१०–'निधान स्थान' नास्ति A.
११–०रडानं A १२–०मकार० A
१३–भसौ रसशब्दा वेग० A.
१४–०वचना B C
१५–विकल्पेन भवन्ति B C परिभाषेन्दुशेखरे ३५ परिभाषा। Cf महाभाष्यम् १ ४ ९. छन्दसि सर्वे विधयो भवन्ति।
१६–मत्वर्थयोर्द्रष्टव्य B C अत्र 'मत्वर्थीयो णो द्रष्टव्य.' इत्येव पाठो युक्तः स्यात्।
१७–०वरे० B C
१८–सकर्मल० B C
१९–प्रस्योदाहरणमिति A.
२०–०रण्यान्यसाविति A [ ऋ० १०।१४६।१ ]
२१–व्याख्याता A
२२–०त्यादिमु० A.
२३–०मुख्यता A.
२४–प्रसन्नता A.
२५–०हरणं A
२६–तथापि A
२७–'तु' नास्ति C २८–दृश्यते C
२९–[ऋ० १।२४।३]
३०–'मीमहे' नास्ति B C
३१–ऊ वश्शेपो B. ३२–यूपे बद्ध A

प्रार्थयते[1], अभिरित्याख्यातेन[2] सम्बध्यते । त्वा त्वां हे देव[3] सवित. । ईशानमीशितारमायुरादीनां वार्याणां वरणीयानां सर्वार्थानां[4], सदा[5] अवन् प्रायणादिभ्य[6] सर्वप्राणिना सर्वदा रक्षित[7] भागमंशमाभिमुख्येन ईमहे[8] याचामहे । कस्य भागम[9] ? आयुष[10], सामर्थ्यात् । आयुष्मत[11] एव वा । भागशब्दो भजनीयत्वात्[12] । आयुर्याचामह[13] इत्यर्थ ।

प्रतीत्येतस्य[14] प्रातिलोम्यम् । एतस्याभिमुख्यस्य वैपरीत्यम । उदाहरणम्—'यज्ञैरिषूः-भङ्‌ःयेषाम्'[15] । पायोरार्षमग्निरुच्यते[16] । यज्ञैरिति[17] हेतौ तृतीया, प्रयोजनस्य च हेतुत्वेन विवक्षा, यज्ञैर्हेतुभूतै, यज्ञार्थमविघ्नत्वेन यज्ञसिद्ध्यर्थमित्यर्थ । इषू-इषुस्थानीया गत्वयोज्यका[18]. पुनस्ता आत्मीया ज्वाला[19] सन्नममान. सन्नमयन् यातुधानान् प्रति प्रह्वीकुर्वन्[20], हे अग्ने ! वाचा वाक्शब्दलक्षया[21] शल्यान् हृदयशल्यकल्पान् तानेव यातुधानान्, अशनिभिः-इषुविशेषणमेतत्, 'अशू व्याप्तौ'[22], व्याप्त्रीभि[23] पृथुदीर्घाभिरित्यर्थ., दिहानः दहेरिदं[24] रूपम, दहन्त्येभिरित्थंभूताभिर्ज्वालाभिः[25], विध्य[26]-'व्यध् ताडने'[27], ताडय हृदये यातु-

१—प्रार्थ्यते A
२—अभीत्युपसर्गोऽन्त्येनाख्या० B C.
३—'देव' नास्ति A
४—'हे' इति वर्त्तते B C.
५—'सर्वदा' इत्यत्राधिक पाठः A.
६—'रक्षन् पापेभ्यो मरणादिभ्यस्त्रायमाण' इत्यत्राधिक पाठ उपलभ्यते A.
७—रक्षिता A.
८—'ईमहे' नास्ति B C.
९—भाग A
१०—सामर्थ्यादायुष B C
११—आयुर्वचन य एव वा B C
१२—भजनीयत्वाद् भागशब्दः B C.
१३—आयुरीमहे B C.
१४—प्रतीतेत्यस्माभि० B. C
१५—[ ऋ० १०।८७।४ ]
१६—वायोरातर्षा अग्नि० B पायुर्नाम भारद्वाज ऋषि, तस्येदमार्षमग्निश्च देवतेत्यर्थ ।
१७—इत आरभ्य 'इत्यर्थ.' इत्यन्तस्य पाठस्य स्थाने—'यज्ञैर्हेतुभूतैरविघ्नेन यज्ञसिध्यर्थम्' एतावानेव पाठ A
१८—गच्छोपरताः B गच्छयोपरता C
१९—आत्मीयमुज्ज्वाला B
२०—प्रसीकुर्वन् A तत्रेद पद 'यातुधानान्' इत्यस्य प्रागेव लिखितम् ।
२१—वकधतलक्षणेय .ह B. C
२२—[ धातुपाठ., स्वादि०, आत्मने० ]
२३—व्याप्तिमद्भि A. व्याप्तीभीः C
२४—'इद' नास्ति A.
२५—दाह (हि) काभिरि (रे) ताभिरि० B C
२६—०र्वापलाभि० B C
२७—'विध्य' नास्ति A
२८—[ धातुपाठः, दिवादि०, परस्मै० ]।

धानान् राक्षसान्,[1] विध्वा च[2] प्रतीच[3] प्रतीचीनान्[4] विपरीतगतीन्[5] पराङ्मुखानित्यर्थः, बाहून्[6] प्रतिभङ्ग्धि प्रतिमोचय,[7] एषां यातुधानानाम्[8]।

अति सु इत्यभिपूजितार्थे[9]। अतिसू अभिपूजितार्थमाहतु[10]। 'अतिब्राह्मण.' 'सुराजे'-ति लोके। वेदे च[11]-'अति त्री सोम०-चोदयः'[12]। कश्यपपुत्रस्यासितदेवलापरनाम्न आर्षम्,[13] सोम उच्यते। अत्युपसर्गो 'भ्राजसे'[14] इत्यनेन सम्बध्यते[15]। त्रीणि[16] कानि? सोमवास्तूनि संस्तुतिसामर्थ्यात् सवनानि। अपिशब्दलोपश्चात्र द्रष्टव्यः, त्रीण्यपि सवनानि, हे सोम! रोचना रोचनानि त्वया दीप्त्या दीप्तानीत्यर्थः। क्षेहन[17]-यागसाधनभावेनारोहन्, त्रिष्वपि सवनेषु यागसाधनभावं प्रतिपद्यमान इत्यर्थः। न शब्दः संप्रत्यर्थे। भ्राजसे अतिभ्राजसे सम्यक् संस्कारलक्षणया[18] दीप्त्या सुष्ठु शोभनं[19] दीप्यस इत्यर्थः[20]। प्रत्यक्ष-कृतोऽयं मन्त्रः। 'इष्णन्' इति चानामन्त्रितम्,[21] अत एकवाक्यतायै[22] यत्तदावध्याहार्यौ,[23] यस्त्वमतिभ्राजसे स इष्णन्,[24] 'इषु आभीक्ष्ण्ये'[25] आभीक्ष्ण्यं च[26] पौन पुन्यम्, तेन सामर्थ्याद् व्याप्तिर्लक्ष्यते, उक्तेन प्रकारेण व्याप्नुवन्,[27] किम्?[28] कृत्स्नं यज्ञमिति शेषः। यज्ञनिर्वृत्ति-

---

१–'राक्षसान्' नास्ति A
२–'च' नास्ति A
३–प्रतीचा B.
४–प्रत्य चित्रून् B C
५–'विपरीतगतीन्' नास्ति A.
६–बाहु प्रतिभञ्जि B
७–०मोभय B C
८–'यातुधानानाम्' नास्ति B C
९–वाक्यमिद न लिखितम् B ०तार्थ C
१०–अति सु इत्यभि० B
११–'वेदे च' नास्ति B. C
१२–[ ऋ० ९।१७।५ ]
१३–०स्यास्य तद्देवस्यापर० B ०त्रयासित देवत्यापर० C.
१४–०जस' इत्येतेन B. C
१५–स्वबध्यते C.
१६–त्रिकानि इत्यारभ्य सम्यक् इत्यन्त. पाठ-स्त्रुटित A
१७–'रोहन्' इत्येव युक्त पाठः।
१८–ससार० B C
१९–'सुष्ठु शोभन' नास्ति A
२०–'इत्यर्थ' नास्ति B C.
२१–चामन्त्रि० A.
२२–अत एव वाक्यत्वाय A.
२३–०ध्यार्यौ A.
२४–अयमस्त्वमातिभ्रासे इष्णन् B C
२५–[ धातुपाठ., क्र्यादि० परस्मै० ] 'आभीक्ष्ण्ये' नास्ति B.
२६–'च' नास्ति A
२७–व्याप्नुवेन A.
२८–'किम्?' इति नास्ति B. C.

द्वारेण[1] सूर्यं न सूर्यमिव, यथा सूर्यं चोदय[2]—चोदितवानसि, तद्वद्दिवं द्युलोकं[3] सामर्थ्या-द्यजमानं चोदय प्रेरय गमयेत्यर्थ.। सर्वस्यैव[4] ह्युत्कर्षस्य धर्मायत्तत्वात्[5], धर्मस्य च ज्योतिष्टोमादिसाधनत्वात्, ज्योतिष्टोमादेश्च सोमसाधनत्वात्, सोमस्य सूर्यमिव कर्तीरं[6] दिवं[7] गमयेत्येवं स्तुतिरुपपद्यते।

सु शब्द[8] 'सुदेवो असि'[9] इत्यत्र व्याख्यास्यते।

निर्दुरित्येतयोः[10] प्रातिलोम्यम्। निर्दुरित्येतावतिस्वो[11] प्रातिलोम्यम, कुत्सामाहतु[12]। उदाहरणम, लोके–निराकृति, दुराकृति[13]। वेदे–'यदादीध्ये०'[14]। निरित्येष[15] समित्येतस्य स्थाने'एतस्मिन् प्रदेशे व्याख्यास्यते। दु शब्दस्योदाहरणम्[16]—'मानः समस्य दूढ्यः'[17]। एतदपि–'सीमिति परिग्रहार्थीयं सर्वनामानुदात्तम्'[18] इत्यत्र व्याख्यास्यते[19]। केचित्तु नि-सममित्येतस्यार्थवृत्तित्वात्[20] समश्च सम्यकृवादिविषयत्वात्[21] पूर्वमनुदाहरणं मन्यन्ते। तेषामुभयवचनत्वेन[22] 'यस्ते गर्भममीवा'[23] इत्युदाहरणमुपरिष्टाद्[24] व्याख्यास्यते।

न्यवेति विनिग्रहार्थीयौ। निग्रहो[25] नियमनम। लोके निगृहीतोऽवरुद्ध इति[26]। वेदे–[27]

---

१–०निवृत्तिद्वारौ (रा) B C.
२–०दनय' B
३–तद्वदीवन्यालोक B. C
४–०स्यैवाभ्युपक० A
५–धर्मापत्त० A
६–'कतीरं' इति पाठ सदिग्ध', कदाचिदत्र 'कर्तारं' इति स्यात्।
७–दिवा C.
८–सुशब्दस्य B C.
९–अथ द्वादशे व्या० B C [ऋ० ८।६९।१२]
१०–निदुरिरिति एत० A
११–दुर्निरित्ये० B. C
१२–कुत्सनामाहत्य B. C
१३–०कृतिरिति B
१४–[ऋ० १०।३४।५]
१५–इत आरभ्य 'प्रदेशे' इत्यन्तः पाठस्त्रुटितः B. [निरुक्तम्—१२. ७.]
१६–०शब्दोदा० B C
१७–[ऋ०–८।८५।९] 'दूढ्यः, एतदपि' इति नास्ति B C
१८–[निरुक्तम् १ ७]
१९–'व्याख्यास्यते' नास्ति A
२०–०निसासमर्थवृत्तित्वात् समश्च सश्च सत्ताविषयत्वा पूर्वमनुदाहरण स मन्य B C.
२१–अत्र 'सम्यक्त्वादि०' इति पाठो युक्तः।
२२–०भयवत्त्वेन B C.
२३–'अमीवा' इति पद न लिखितम् A. [ऋ० १०।१६२।२]
२४–एकादशे B C
२५–नियमो B
२६–अत्र 'निगृह्णाति, अवगृह्णाति' इत्यपि पाठ. A
२७–इत आरभ्याऽऽपृष्ठत्रय पाठस्त्रुटित. A.

'न्योषतात् उदग्ने तिष्ठ'[1] । वामदेवस्यार्षम्, परा च, उत्तिष्ठ हे अग्ने ! उत्थायामित्रान् प्रत्यातनुष्व, आभिमुख्येन तनुष्व[2] विस्तारय, किम् ? सामर्थ्याज्ज्योति । निशब्द ओषतादित्येतेन सम्बध्यते, विस्तार्य च तेनामित्रानस्मच्छत्रून्, न्योषतात्–'उष दाहे'[3] इत्यस्य लोण्मध्यमैकवचने तातङि रूपम, न्योषतात्—नियम्य दह । तिग्महेते–इति=तिग्मास्तीक्ष्णा ज्वाला[4] हेतिरायुधं यस्य स एव[5] संबोध्यते–हे तिग्महेते ! यश्च न –अस्माकं समिधान दीध्यमान सन्दीप्यमान, अरातिं–मित्रमपि व्युत्थाप्य शत्रुं, चक्रे–करोति, महादुर्जनं नीचा-नीचै कृत्वा निगृह्येत्यर्थ , तं धक्षि-दह, किमिव ? अतस न-अतसशब्देन काष्ठमुच्यते, काष्ठमिव शुष्कमप्रतिबन्धेनेत्यभिप्राय ।

अवेत्यस्योदाहरणम् 'त्वं नो अग्ने वरुणस्य'[6]। त्वं नोऽस्माकं हे अग्ने ! विद्वान् जानन्, किम् ? सामर्थ्याद्युक्तताम्, वरुणस्य देवस्य दानादिगुणयुक्तस्य । हेड क्रोधनामेदम् । अस्माकमुपरि यो रोष., तमवयासिसीष्ठा –यातेर्लिङि व्यत्ययेनात्मनेपदम्, अवगृह्यावनीयाया , अन्तर्नीतण्यर्थो वा याति., अवयावय अवगमयेत्यर्थ । यश्च त्वं यजिष्ठ.–अतिशयेन यष्टा, वह्नितमो वोढृतमश्च हविषासे[7], शोशुचान.–अत्यर्थ दीप्यमान , विश्वा—सर्वाणि, द्वेषासि–द्वेष्याणि द्वेष्टॄणि वा रक्षआदीनि, प्रमुमुग्धि-प्रकर्षेण मुञ्च, अस्मत्–अस्मत्तोऽपनयेत्यर्थ ।

उदित्येतयोः प्रातिलोम्यम्–अनवरोध , उपसर्गस्तमाह । उदाहरणम्–उच्छ्रित उन्नत.-लोके । वेदे–'उच्छ्रयस्व वनस्पते'[8] । विश्वामित्रस्यार्षम् । ऊर्ध्वं श्रयस्व-ऊर्ध्वो भव, हे वनस्पते ! वनस्पतिविकारयूप वर्ष्मन् ! वर्ष्मशब्दात्परिहाणवचनादन्तर्नीतमत्वर्थात्[9] सप्तम्या लुक् द्रष्टव्य , वर्ष्मवति पर्णाहवति[10], कस्मिन् ? सामर्थ्याद् यूपवटे, पृथिव्या -

१–नायमाद्यप्रतीको मन्त्रस्य, मन्त्र पश्यत– [ ऋ० ४।४।४ ]

२–'०मं तनुष्व विस्तारय, किम् ?' इति पाठस्त्रुटित B

३–[ धातु० भ्वादि० परस्मै० ७।७२७ ]

४–'०स्तीक्ष्णा ज्वाला हेति०' इति पाठस्त्रुटितः B,

५–'एव रस०' इति पाठ उपलभ्यते B C

६–[ ऋ० ४।१।४ ]

७–अत्र 'हविषाम्' इत्येव युक्त पाठ ।

८–[ ऋ० ३।८।३ ]

९–अत्र 'परिणाह०' इति पाठो युक्त ।

१०–अत्र 'परिणाह०' इति पाठो युक्त ।

वेदिलक्षणाया, अधि-उपरि मि॑ अ, सुमिती-तृतीयाया· पूर्वसवर्ण, सुमित्या शोभने मानन[1] त्रियरत्नस्यालोकानारूपेण चतुररत्निपशुनारूपेणेत्यादि न मीयमान, वर्चो[2] धा — वर्च -ब्राह्मं तेजो धा -धेहि देहि, कस्मै[3] ? यज्ञवाहसे-यज्ञं वहत्यन्तं नयति समापयति देवान् प्रति प्रापयतीति यज्ञवाहा यजमानस्तस्मै ।

द्वितीयमुदाहरणम्–'समिद्धस्य श्रयमाणः'[4] । समिद्धस्य सन्दीप्तस्याहवनीयस्य[5] योऽवदस्तं श्रयमाण सेवमानस्तत्र[6] प्रक्षिप्तः सन्नित्यर्थ· । ब्रह्म स्तुतिलक्षणमनुवचनरूपं, वसान·[7] सम्भजमान·, अजरं[8] सुवीर जरावर्जितं नित्यं शोभना वीरा ऋत्विग्यजमाना· कर्तृत्वेन सम्बन्धिनो यस्य तत्[9], प्राप्तव्यैर्वा पुत्रैर्वीरैरुपेतम्, आरे-दूरनामेदम्[10], दूरे अस्मदस्मत्त, अमतिः–अशोभना मतिर्यस्य सोऽमतिस्तं पापमतिदुर्जनं, बाधमानः–अपनयन्, उच्छ्रयस्व-ऊर्ध्वं श्रयस्व ऊर्ध्वं तिष्ठेत्यर्थ । महते सौभगाय सुभगत्वाय प्रियत्वाय सुधन-[11]त्वाय वा, सर्वलोकस्य प्रिया सुधना वा स्यामेत्येव समर्थमित्यर्थ·[12] ।

समित्येकीभावमाह, लोके-सङ्गतौ ग्रामौ । वेदे–'सं गच्छध्वं०'[13] । संवननस्यार्षम् । सगच्छमानानां ज्ञातीनां संवननसूक्तमेतत् । अत्र च सुखप्रतिपत्त्यर्थं दृष्टान्तत्वेनापरो धर्म प्रथमं प्रदर्श्यते । देवा· पूर्वे यज्ञाङ्गभूता भाग स्वं स्वं संजानाना सङ्गता जानन्तो यथोपासते दीयमानं प्रतीक्षन्त इत्यर्थ, एवं हे ज्ञातय ! संगच्छध्वम्-एकीभवत, संवदध्वम्-असद्भाषणं[14] परित्यज्य संवादं कुरुत, सं वो मनांसि जानताम्-सममपि संवादेन वो युष्माकं मनांसि ज्ञातव्यं जानतां[15] बुद्ध्यन्ताम्, यथा देवास्तथैकचित्ता भवतेत्यर्थः ।

---

१–'शोभमानेन' इति पाठ स्यात् । इत पर 'मीयमान' इत्यन्त पाठो न्यूनाधिकाक्षरवर्णरूपत्वात्सदिग्धोऽस्पष्टार्थक एव ।

२–वर्चे C

३–कमस्मैर्या B.

४–[ ऋ० ३।८।२ ]

५–०स्याहयस्य C

६–तत्र. C.

७–अत्र 'वन्वानः' इत्येव युक्त. पाठ. ।

८–'अजरं' इति नोपलभ्यते A. ।

९–अत्र 'तम्' इति पाठो युक्त. ।

१०–[ निघ० ३।२६ ]

११–'सु०' इति नास्ति B.

१२–'समर्थम्' नास्ति B

१३–[ ऋ० १०।१९१।२ ]

१४– सभाषण B

१५–अत्र 'जानन्ता' इति पाठ. । A.

व्यपेत्येतस्य प्रातिलोम्यम् । विष्वग्भावमाहतु[1], विगता[2] विष्वग्भूता इत्यर्थः । वेदे-ऽपि[3]-'वि शत्रून् ताळिह'[4] 'आराच्छत्रुमप बाधस्व'[5] इति[6] मन्त्रावुपरिष्टाद् व्याख्यास्येते ।

अन्विति[7] सादृश्यापरभावम् । अपरभावः पश्चाद्भावस्तमाह । अनुरूपमस्येदमिति सादृश्यम् । अनुगच्छतीत्यपरभावः ।

अपीति संसर्गम् । संसर्गः समुच्चयोऽभिप्रेतः । अपि सिञ्च अपि स्तुहि, सिञ्च स्तुहि[8] चेत्यर्थः । वेदे-[9]'ग्रीवायां बद्धो अपी'[10]ति । उपरिष्टाद् व्याख्यास्यते ।

उपेत्युपजनम् । उपजनमुपचयः[11] उपधानमुपकारः[12] । वेदे-'उप बर्बृहि वृषभाय'[13] इति । नैगमे[14] व्याख्यास्यते मन्त्रः ।

परीति सर्वतोभावम् । लोके-परिषिञ्चेदिति[15] । वेदे-'परीतो षिञ्चता सुतम्'[16] इति । अद्रिभिः[17] सप्तर्षीणामार्षम् । 'सोमो[18] य उत्तमं हविः' इत्युद्देशार्थम्[19] । यच्छब्दश्रवणादुद्दिष्टस्य च प्रतिनिर्देष्टव्यत्वात् । तच्छब्दमध्याहृत्य[20] प्रथमः पादः पश्चाद्योजयिष्यते । हविषां[21] मध्ये यः सोमः[22] उत्तममतिशयेनोत्कृष्टं हविर्दधन्वान् श्रवणेन[23] च दधन्वान्[24] यो

१—०हतु C.

२—'अगता' इत्यधिकः पाठः B C

३—'अपि' नास्ति B

४—[ ऋ० १०।१८०।२ ] नायमाद्यः प्रतीकः ।

५—[ ऋ० १०।४२।७ ]

६—'उपरिष्टाद् व्याख्यास्यते मन्त्रः' इत्येव पाठः B C

७—सर्वस्याप्यस्यानूपसर्गव्याख्यानस्य स्थाने B C. पुस्तकयोरित्थं पाठ उपलभ्यते—"अस्वि (न्वि) ति सादृश्या (म?) परभाव, (अपरभाव ) पश्चाद्भावत (स्त) श्चा (मा) ह । 'मातुलतन् (मातर) द्व (द्वि) पदोऽनुभ (ह) रन्ते' (वेदे)। तस्मादनुपशवो मातर (तस्मादनुमातरः पशवो) भवन्ति । अपरभावे-'अनुरथ पादात' वेदे, तस्मात् ज्ञेया (?) सयन्त (?) पापीयानन्वेति (०यानवेति C )" इति ।

८—स्युहि B. C.

९—'चेत्यर्थः ।वेदे-ग्री०' इति पाठस्त्रुटितः B

१०—[ ऋ० ४।४०।४ ] नायमाद्यः प्रतीकः ।

११—०जन उप० A

१२—'लोके' इत्यधिकः पाठः A

१३—[ ऋ० १०।१०।१० ], नायमाद्यः प्रतीकः । 'वृषभाय' इति न लिखितम् A

१४—'नैगमे' नास्ति B C

१५—'परिषिञ्च वृक्षम्' इत्येव पाठः B C.

१६—परितो षिञ्चतम् B C [ ऋ० ९।१०७।१ ]

१७—अत्र '०ञ्चता सुतं—अद्रिभिः' इति पाठः साधीयान् भाति । अन्यथा त्वद्रिभिरिति पदमविकमेवात्र प्रतीयते ।

१८—सुतं सोमो य B C

१९—०द्देशार्थं B. C.

२०—०वृत्य C.

२१—'सोमः' इत्यत्राधिकः पाठः A.

२२—'उत्तमः' इति नास्ति A

२३—श्रयणेन B. C

२४—दग्ध B अग्रे पाठस्त्रुटितः । दधना तद्वान् C

हविष्यति[1] नर्यो नृभ्यो मनुष्येभ्य ऋत्विग्यजमानेभ्यो[2]ऽभिलषितफलसाधनत्वेन[3] हित', अप्स्वन्त -अपा वसतीत्यर्थे कथनाल्लक्षणानां मध्ये, आसुषाव-व्यत्ययेनायं कर्मणि कर्त्तृ-प्रत्ययो लिट्[4], सोममिति च प्रथमार्थे द्वितीया[5], आसुषाव-आभिमुख्येन[6] सुतोऽभिषुत. सोमोऽद्रिभिरभिषवग्रावभिस्तं[7] परित[8] सिञ्चत । ऋत्विजामेष[9] प्रैषः, इतो दशा[10] पवित्रान् परिषिञ्चत सर्वत[11] क्षारयतेत्यर्थ । सुनमभिषुत[12] सन्तम् । तथा–'इन्द्रायेन्दो परि स्रव'[13]इत्यु-दाहरणमु[14]'पलप्रक्षिणी'त्यत्र व्याख्यास्यते ।

अधीत्युपरिभावम् । अधितिष्ठति, अध्यास्ते । वेदे—'पवमाना दिवस्प०–०सानवि'[15] । निध्रुवे काश्यपपुत्रस्यार्षम्[16] ।

अत्रेतिहासमाचक्षते—'गायत्री वै श्येनो भूत्वा दिवः सोममाहर[17]दि[18]'ति । तदनेन[19] मन्त्रेण सोमाहरणमुच्यते । पवमाना'-पवमानशब्दोऽत्र सोमवचन. । पवतेर्गति[20]-कर्मण । तत्र तत्र[21] पवमानाद्गमनात्[22]पवमाना. सोमा' । 'जात्याख्यायामेकस्मिन् बहु-वचनम्'[23], व्यत्ययेन वा । पवमान. सोमो दिवः प्रथमं[24] द्युलोकात् परीत्युपसर्गोऽसृक्षतेत्या[25]-

---

१–भवि० C.
२–'ऋत्विग्यजमानेभ्यो' नास्ति A
३–०भिग्यषितफलितसावकत्वेन हिद्र अर्थवन्त B
 अपा वसतीवर्थे कवननालक्ष० B C
४–अत्र 'शे' इत्यधिक पाठ A
५–द्वितीया प्रथमार्थे B C इत पर त्रुटित B
६–आसुषुवे आग मु० C.
७–०दिहि० B C
८–'अभिषवग्रावभि' नास्ति A
९–०मय B C
१०–दशा B C
११–०र्वत आक्षा० A
१२–स्तुतमभिष्टुत B C
१३–[ ऋ० ८।९१।३ ] नायमाद्य प्रतीक । 'परि चेदुदा०' A
१४–'०मुपल' इयत आरभ्य '०त्युपरि०' पर्यन्त पाठस्त्रुटित B
१५–[ ऋ० ९।६३।२७ ] अत्र 'पृथिव्यामविसानवि' B C.
१६–काश्यप० A
१७–०भर० B C. "सा गायत्री सोममाहरत्" (शत० ब्रा० ६।२।९)
१८–०दिवि B
१९–तदेतदन्ने (ने) न B C
२०–'प' त्रुटित B
२१–'तत्र' नास्ति A
२२–प्रवणात् B C अत्र 'पवनात्' इति पाठो युक्त स्यात् ।
२३–[ अष्टा० १।२।५८ ]
२४–प्रथन् B C
२५–०सर्ग आसृजते० A

ख्यातेन संबध्यते[1]। ततः क्रमेणान्तरिक्षादसृक्षत[2], सृजे कर्मणि बहुवचनमेतत्[3] लुङि[4] रूपम्, 'असर्जिषत[5] पवमाना' इत्येतत्सम्बन्धाच्चैतदपि[6] बहुवचनमेकवचनस्यैव[7] स्थाने। असर्जि सृष्ट, अपहृत्य[8] श्येनरूपया गायत्र्या मुक्त इत्यर्थ। क्व? उच्यते—पृथिव्यामधि-उपरि, सानवि-सानुः समुच्छ्रितं भवति, समुच्छ्रिते पर्वतवनस्थल्यादौ प्रदेशे। अथवा[9] दिवो द्योतनाद् दशापवित्रान्-अन्तरेमे द्यावापृथिवी[10] क्षियतीति[11]-तदेवान्तरिक्षम्, तस्मात्पृथिव्या वेदिलक्षणाया उपरि समुच्छ्रिते हविर्धानदेशे।

ऐश्वर्यम्[12]—आचष्ट इति शेषः। ऐश्वर्ये—अधिब्रह्मदत्ते पञ्चाल्य.। छन्दसि मृग्यमुदाहरणम्[13]।

**एवमुच्चावचानर्थान्प्राहुस्त उपेक्षितव्याः।**

इत्याचार्यमहेश्वरकृतायां[14] निरुक्तभाष्यटीकायां
षष्ठस्याध्यायस्य[15] प्रथम पाद.।

---

१—सय० C
२—०सृजत A
३—०मेतेर्लु० B C
४—लुटि A
५—आसृज्यन्ते B. C.
६—०बन्धादेस्त (त) द० A
७—'०मेकवचनस्यैव' नास्ति A. 'एव' इति B पुस्तकेऽपि नास्ति।
८—०हृत्य A
९—अवा B C
१०—०पृथिव्यौ B. C
११—क्षीयन्तीति B क्षीयतीति C
१२—इत आरभ्य 'छन्दसि' पर्यन्तः पाठो नोपलभ्यते B C
१३—'सर्वं यश्चाविवितिष्ठति' (अथर्व० १०।८।१) 'यत्राधि मूर उदितो विभाति [ऋ० १०।१२१।६]
१४—'इति' नास्ति B C
१५—प्रथमस्या० B C

अथ निपाताः । उक्ते नामाख्याते । उपसर्गाश्च । अनन्तरं निपाता वक्ष्यन्ते । उच्चावचेष्वित्यादिना । [1] त [2] उच्चावचेष्वनेकप्रकारेषु प्रतिपाद्येष्वर्थेषु [3] प्रतिपादकत्वेन निपतन्ति [4] वर्तन्त इत्यर्थः । तेषामर्थ[5]प्रदर्शनार्थमुच्यते—अप्युपमार्थ इत्यादि । अपि शब्दः समुच्चये, उपमायां चार्थे कर्मोपसङ्ग्रहे च पादपूरणाश्चेत्यर्थ[6]. । तेषाम्—इव, न, चित्, नु—इत्येते चत्वार उपमार्थे[7] भवन्ति[8] । इवेत्ययं तावद्भाषायां चान्वध्यायं[9] च । भाषा लोक', अन्वध्याय[10]मित्यध्यायशब्दः—'अध्यायन्यायोद्यावे[11]'ति करणाधिकरणयोर्निपात्यते । वेदश्च यद्यप्यध्ययनस्य कर्म, तथापि कर्मणः क्वचित्करणत्वेन विवक्षा दृश्यते, ओदनेन भुङ्क्त इति । अतोऽत्र करणत्वेन विवक्षिते वेदे वर्त्तते । तस्यानुशब्देन सप्तम्यर्थे[12]—'अव्ययं विभक्ती[13]'त्यव्ययीभाव । अधिस्त्रीति यथा । नित्यसमासत्वादस्वपदविग्रह[14] । एवं विगृह्यार्थ[15]. प्रदर्श्यते-अध्यायेऽन्वध्यायमिति समासात् । सप्तम्या–'नाव्ययीभावादतः[16]' इत्यम्भावः । लोके वेदे चेत्यर्थ. । अग्निरिवेन्द्र इवेति, उभयत्रोदाहरणे । लोके-अग्निरिव दीप्त[17] , इन्द्र इव विक्रान्त इति । वेदे–'अग्निरिव मन्यो०–०नुदस्व[18]' । मन्योरार्षम्[19] । यथाग्निस्त्विषितो[20] दीप्त सन् सर्वमभिभवति, एवं त्वं[21] हे मन्यो ! सहस्व, 'षह मर्षणे[22]' अभिभवे[23] च छन्दसि, आभिभवा[24]ऽस्मच्छत्रून्, तदर्थं सेनानीः सेनापतिर्नोऽस्माकं हे सहुरे ! अभिभवनशील ! त्वमाहूत[25]' सन्नेधि भव, हत्वाय 'क्त्वो यक्[26]' शत्रून्, विभजस्व वेदस्तदीयं धनं, अस्म-

---

१—अय प्रतीको नास्ति A

२—'त' इति नास्ति B C.

३—०पाद्यायेष्व० B C

४—'निर्गच्छन्ति' इत्यधिक पाठ B निगच्छन्ति C

५—'अर्थ०' इति नास्ति A

६—पदपूरणायेत्यर्थे B C.

७—उपमायामर्थे B. C. ८—वदन्ति A.

९—चासाध्या० B १०—अध्याय० B C

११—०योन्दावे० C. [ अष्टा० ३।३।१२२ ]

१२—सप्तमीविभक्त्यर्थे A

१३—[ अष्टा० २।१।६ ] ०भक्ती' त्येवमव्य० B C

१४—अत्र 'स च' इत्यधिक पाठ' B. C.

१५—अत एव विगृह्य दर्श्यते B. C

१६—[ अष्टा० २।४।८३ ]

१७—तीक्ष्ण. B ती उष्ण्यः C.

१८—[ ऋ० १०।८४।२] 'नुदस्व' इति नास्ति B.C.

१९—'मन्योरार्षम्' नास्ति B. C

२०—०ग्नस्त्विषि C ०षि दीप्तः स B. C.

२१—त्व व है C.

२२—[ धातु० भ्वादि० आत्मने० ११९०५ ] ।

२३—०ऽभि'सवे A. २४—अपि वा० A.

२५—भूत B C. 'हूत ' इति भवेत् ।

२६—'क्त्वो यक्' [ अष्टा० ७।१।४७ ] इति नास्ति B. C.

दीयसैनिकानामोजो[1] बलं मिमानो यो महाबलस्तस्मै बहु देहि, योऽल्पबलस्तस्मा अल्पमित्यर्थः। अथवा 'ओजो मिमान' इत्यस्य परेण 'विनुदस्वे'त्यनेन सम्बन्धः। ये केचिद्धताशिष्टास्तेषां बलं मिमान.,[2] इह[3] यदि बलवन्त[4] आसीना' पुनरप्यस्माभि'सह संग्रामं कर्त्तुं समर्थास्तत एनान् विनुदस्व विविधं प्रेरय, इतस्तानपनयेत्यर्थ.[5]। मृध —मृध इति संग्रामनाम, मृधः[6] करोति 'तत्करोती'[7]ति णिच्, ण्यन्तात् क्विप्, मृध'-सङ्ग्रामकारकान्[8] मृधो हताशिष्टान् सङ्ग्रामकारिण इत्यर्थ।

अन्यदुदाहरणम्[9]–'इहैवैधि०—०धारय'[10]। ध्रुवस्यार्षम्। राजाभिषिक्त उच्यते। इहैव राज्ये[11] एधि भव, अतो मापच्योष्ठा'[12] पर्वत इवाविचाचलि[13], अचलोऽत्र इन्द्र इव चेदं सर्वमुपभुञ्जान इह राष्ट्रे ध्रुवस्तिष्ठ, इहैव च भूमौ[14] विभूतावविनाशयन्निदं राष्ट्रं, उ[15] इति पदपूरण., धारय।

नेति प्रतिषेधार्थीयो भाषायाम्, प्रसिद्ध एव, न पचति न गच्छतीति[16]। प्रसङ्गेन चेदमेव[17] तस्य परयोश्च 'चित्, नु' इत्येतयोरर्थान्तरवचनम्[18]। 'तेषामेते चत्वार उपमार्थे भवन्ती'ति केवलस्योपमार्थीयवचनस्य प्रतिज्ञातत्वात्, 'उभयमन्वध्यायमि'ति[19] प्रतिषेधार्थीयश्चोपमार्थीयश्च। प्रतिषेधार्थीयस्योदाहरणम्–'नेन्द्रं देवममंसते'[20]ति। उपमार्थीयस्योदाहरणम्[21]–'दुर्मदासो न सुरायामि'[22]ति। कीदृश' पुन प्रतिषेधार्थीय.? कीदृशश्चो-[23]

१—०दीयाना B. C
२—०लविमान B.
३—'इह' नास्ति B C इति B
४—०वत इत्यानायीनाः पुनरप्यर्थाभिः B.
५—इतः स्थानादप० B. C.
६—मृध A [निघ० २।१७]
७—[ ३।१।२६ ] अष्टाध्यायीसूत्रे वार्तिकम्।
८—'मृधः' इति पदमत्राधिकं भाति। 'मृधः सग्रामकारिण इत्यर्थ.' इत्येव पाठ. B
९—'अन्यदुदाहरणम्' नास्ति B C.
१०—[ ऋ० १०।१७३।२ ] 'धारय' इति नास्ति B. C.
११—राष्ट्रे B C
१२—०व्यथिष्ठा. B ०वच्योष्ठा C
१३—अविचाचलि' स्थिरतर' B C.
१४—'भूमौ' नास्ति B. C
१५—उ० पाद० A
१६—न पचतीति गच्छति B C.
१७—०मेतस्य B. C
१८—०योरन्यत्र द्विवचनम् A.
१९—'इति' नास्ति A
२०—[ ऋ० १०।८६।१ ]
२१—'उदाहरणम्' इति नास्ति A.
२२—[ ऋ० ८।२।१२ ] २३—०शः पुनरुप० A.

पमार्थीयः ? उच्यते[1]–प्रतिषेधार्थीय , पुरस्तादुपचारस्तस्य, [2]उपचार प्रयोग उच्यते, यत्प्रतिषेधति तस्य पुरस्तात्प्रयोगो यस्य स प्रतिषेधार्थीय. । यथा—'नेन्द्रं देवममंसत'[3] इति । अत्रामंसतेत्यस्य पुरस्तान्नेत्यस्य प्रयोग. । उपमार्थीयः-उपरिष्टादुपचारस्तस्य येनोपमिमीते[4]–यदुपमानम्, तस्योपरिष्टात् प्रयोगो यस्य स उपमार्थीय[5] । यथा—'दुर्मदासो न'[6] इति । 'वि हि सोतोः'[7]इति सप्तदशे मन्त्र' पठित , स तत्रैव व्याख्यास्यते । इतरस्तु व्याख्यायते—'हृत्सु पीतासो०–०जरंते'[8] । मेधातिथिप्रियमेधयोरार्षम्[9] । हृदयेष्ववस्थिता[10][11]. पीतास' पीताः सन्त. सोमा युध्यन्ते सम्यक्-संस्कारसंस्कृतत्वात् प्रमत्तत्वाच्च[12], अहं विशिष्टोऽहं विशिष्ट इत्येवं सङ्घर्षेण युध्यन्त इव, दुर्मदासो न–यथा दुर्मदा. पुरुषा. सुरायाम्, 'यस्य च भावेन भावलक्षणमि'[13]त्येषा सप्तमी, यच्छ्रुतेश्च[14] लक्षणभूतयोग्यक्रियापदा[15]ध्याहार. सुरायां पीतायामिति तद्वत् । ऊधर्न-ऊध इति रात्रिनाम, भोगकालत्वाद्रात्रौ[16] नग्ना संभोगप्रवृत्ता. पुमांस एवं जरन्ते स्तुवन्ति । कम्[17] ? सामर्थ्याद्दातारं यजमान दातार[18]मिन्द्र वा ।

**चिदित्येषोऽनेककर्मा ।** कर्मशब्दोऽत्र[19] निरुक्ते सर्वत्रार्थपर्याय[20]:, अनेकार्थ इत्यर्थः । **आचार्यश्चिदिदं ब्रूयादिति पूजायाम् ।** आचार्येण कस्मिंश्चि[21]दशक्येऽर्थ उक्ते यदो-

१–'उच्यते-प्रतिषेधार्थीयः' इति नास्ति B C
२–अत्र 'यत्प्रतिषेधति' इत्यधिक पाठ. B C
३–[ ऋ० १०।८६।१ ]
४–०मिमीयेत्, उपमान B C.
५–'स उमार्थीय'' इति वाक्य 'दुर्मदासो न, इति' एतस्यानन्तर लिखितम् B C.
६–[ ऋ० ८।२।१२ ]
७–[ ऋ० १०।८६।१ ]
८–[ ऋ० ८।२।१२ ]
९–मेधातिथि' प्रियमेधश्च तयोरा० B C
१०–अत्र 'हृत्सु' इत्यधिक. पाठ. B. C
११–'अवस्थिता.' अस्य स्थाने 'पातृणा' इति पाठः B. C.
१२–देवतायै प्रत्तत्वात् B C
१३–[ अष्टा० २।३।३७ ]
१४–तच्छ्रु० B C
१५–'०पद०' इति नास्ति B C
१६–सभोगकालत्वाद्रात्रिर्नग्नाः B C
१७–किम् ? A
१८–'दातार' इति नास्ति B C अस्य स्थाने 'इन्द्रवो' C.
१९–'अत्र' नास्ति B C. तत्र 'सर्वत्रे'ति पद चात्रैव लिखितम् ।
२०–शब्दपर्याय. B. C.
२१–कस्मिन् शोभने उक्ते A.

च्यते-'आचार्यश्चिदिदं ब्रूयादिति'[1] तदास्य पूजा गम्यते, आचार्य इदं[2] वक्तु शक्नुयान्नान्य इति यासौ पूजा तस्यांश्चि[3]च्छब्द ।

दधिचिदित्युपमार्थे । दधिचित्तक्र दधिचित्कुन्दपुष्पपिटकं[4] दधिसदृशमित्यर्थ । इदं लौकिकमुदाहरणम । वैदिकं तु—'निखातं चिद्यः'[5] 'कुमारश्चित्पितरं वन्दमानं'[6] 'शुनश्चिच्छेपं'[7] इत्यादि[8] प्रचुरं दर्शयितव्यम, एकं दर्शयाम —'निखातं चिद्यः०-० यथा वशत्'[9] । कलेरार्षम[10] । निखातं चित्[11] निखातमिव य पुरु बहु[12] संभृतं वसु धनमुदि-द्वपति । इदिति पदपूरणम । उद्वपति-उत्किरति[13] स्वस्माद्भाण्डागारात्, दाशुषे-'दाश्वान्'[14] इति यजमाननाम शाकपूणिना पठितम । 'हवींषि दत्तवतो यजमानस्यार्थापय'[15] इति श्रुते । स इत्यध्याहार्यम[16] । स वज्री सुशिप्र ,'शिप्रे हनू नासिके वा,'* सुहनु सुनासो[17] वा, हर्यश्व -हरी अश्वौ यस्य स[18] । इदिति[19] पदपूरणम । करत्-करोति, यत्कर्त्तव्यं तत्कुर्वन्न[20] केनचित् प्रतिबद्धुं शक्यत इत्यर्थ', इन्द्र क्रत्वा[21] कर्मणैव[22] न वाङ्मात्रेण यथावशात् यथा[23] कामयते ।

कुल्माषांश्चि[24]दाहरेत्यवकुत्सिते[25] । कुत्सितमेवापकुत्सितम । यदात्यन्तं[26] बुभुक्षितः

---

१—कदाऽस्य A
२—इदं शक्नुयाद्वचनं नान्य A
३—तस्या चि० A.
४—०पुष्प पिटक A
५—[ ऋ० ८।६६।८ ] 'निखात चित्र (य C) पुरु सभृत वसु' B C
६—[ ऋ० २।३३।१२ ] वन्ममान B
७—[ ऋ० ५।२।७ ] शुन शेप B इत पर 'निदित सहस्रात्' इत्यधिक पाठ B. C
८—इत्येवमादि B C
९—[ ऋ० ८।६६।८ ] 'यथावशत्' इति नोपलभ्यते B C
१०—कुवेरार्षम B किवेरा० C
११—'निखात चित्' नास्ति A
१२—'बहु' नास्ति A
१३—'उत्किरति' पद '०गारात्' पदस्यानन्तर लिखितम B C.
१४—शाश्वान् A
१५—०स्यार्थाय C
१६—०हार्य. B
*—निरु० ६।१७
१७—सुनसो B C
१८—हरि अश्वो यस्य स हर्यश्व', B C
१९—'इति' नास्ति B C.
२०—तत्कुत्र केन० A.
२१—क्रुत्वा B
२२—क्रतुनामकर्मणैव A.
२३—'यथा' नास्ति A.
२४—कुन्मासा० C
२५—०त्यपकुर्वीते B.
२६—यात्य० B.

कश्चिन्मृष्टमन्नं मांसौदनादि[1] सिध्यत्[2] प्रतीक्षितुमशक्नुवन् ब्रवीति–कुल्माषांश्चिदाहरेति तदा मृष्टान्मांसौदनादे: कुत्सितत्वं कुल्माषाणां[3] गम्यते। यत्तत्[4] कुत्सितत्वं तत्र चिच्छब्द। प्रदर्शनार्थं चेद[5] चिच्छब्दस्य पूजादीनामुपादानम, समुच्चयेऽपि ह्ययं[6] दृश्यते—अद्या चिन्नू चित्तदपो नदीनां[7]'। अद्य च पुरा च तदेव कर्म नदीनामिति। तथा अप्यर्थे—'सद्यश्चिद्यः[8] शवसा' इत्यत्र सद्योऽपि[9] य शवसा[10] बलेनेति।

नु इत्येषोऽनेककर्मा। इदं नु करिष्यतीति हेत्वपदेशे। कस्मादद्य देवदत्त प्रातरेव भुङ्क्ष इत्युक्ते यदोच्यते–ग्रामं नु गमिष्यतीति–तदा ग्रामगमनस्य हेतुत्वं गम्यते, यस्माद् ग्रामं गमिष्यति तस्मात् प्रातर्[11]भुङ्क्ष इति, तस्यापदेशो[12] नु शब्द.।

कथं नु करिष्यतीत्यनुपृष्टे। पृष्टं[13] प्रश्न, पृष्टमेवानुपृष्टं तस्मिन्ननुपृष्टे प्रश्न इत्यर्थ। यदा हि[14]–'यास्यत्यसौ न यास्यती'ति सन्देहे कश्चिद् ब्रवीति–'कथं नु करिष्यतीति' तदा प्रश्नो गम्यते, तस्मिन्नु शब्द। 'नन्वेतदकार्षीदिति च' द्वितीयमुदाहरणम। तत्र[15] न प्रतिषेधे नु प्रश्ने। यदा हि–ग्रामं अगमत् देवदत्त इति कुतश्चित्प्रत्ययिताच्छ्रुते, आगते देवदत्ते यदाचरितव्यं[16] तदाचरन्तं किञ्चिद् दृष्ट्वा[17] कश्चिद् ब्रवीति–ननु देवदत्तो ग्रामं अगमदिति, तदा–किं देवदत्तो ग्रामं नागमदिति प्रश्नो गम्यते, तस्मिन्नुशब्द[18]।

अथाप्युपमार्थे भवति। 'वृक्षस्य नु[19]', 'अक्षो न चक्रयो:[20]'इत्यादि[21] भारद्वाजस्या-

१–कश्चन मृष्टौ मासौ० A.
२–स्यध्यत् B C
३–कुल्माषाना A कन्मामसाना C
४–यत्तु B C
५–चिद A.
६–'हि' इति नास्ति A.
७–[ऋ० ६।३०।३] अद्याचि (पि C) आ-चित्तदधो (दपो C) न० B C
*–निरु० ४ १७
८–[ऋ० १०।१७८।३] ०श्चिद्यच्छवसा B C.
९–समोऽपि A.
१०–'शवसा' इति नास्ति B. C
११–'प्रातर्' नास्ति A.
१२–तस्माद् व्यप० B
१३–पृष्ट B C.
१४–०भिकरिष्यता (त्य) सौ न करिष्यतीति A.
१५–अत्र नु (न) शब्द प्रतिषेध (धे C) नु शब्दस्तु प्रयले B C
१६–यत्समाचरितव्य तत्समाचरन्त B. C
१७–'किञ्चिद् दृष्ट्वा' नास्ति B C
१८–तस्मिन्नु A
१९–'वृक्षस्य नु ते पुरुहूत वया:' B C [ऋ० ६।२४।३]
२०–[ऋ० ६।२४।३]
२१–'इत्यादि भारद्वाजस्यार्षम्' नास्ति B. C.

षम् । अक्षो न-यथाक्ष, चक्रयोश्चक्रयो सकाशात्[1] हे शूर ! बृहन्[2] ! अन्तरेणापि भाव-प्रत्ययं बृहत्वे[3]ऽयं बृहच्छब्द, बृहत्त्वं[4] महत्त्वं दैवैश्वर्य[5]लक्षणं, ते तव स्वभूतं[6], मह्ना-अयमपि महत्त्वे[7] महच्छब्द, महत्त्वेन, प्ररिरिचे-प्रेत्येषो[8] तीत्येतस्य[9] स्थाने, विरिरिचे[10]ऽतिरिच्यते । रोदस्यो द्यावापृथिव्यो सकाशाद् विनिर्भिद्य द्यावापृथिव्यौ तयो परतोऽप्यस्तीत्यर्थ । अथवा बृहन्नित्यक्षस्य विशेषणम्, मह्नेत्यपि प्रथमार्थे तृतीया, महान् योऽक्षः स यथाऽति-रिच्यते[11], एवं तव महत्त्वम्[12] । किञ्च 'वृक्षस्य नु'[13]-वृक्षस्य वया शाखा[14] एते तव स्वभूता[15] हे पुरुहूत[16] ! बहुभिराहूत ! त्वयि[17] धनमददति[18] दारिद्र्यादस्मा[19]स्वयजत्स्विदानी तवानागमना-दृतयोऽस्मद्यज्ञागमनमार्गा विरुरुहुर्विरूढास्तृणादिभिराच्छादिता इत्यर्थ.[20] । हे[21] इन्द्र ! पूर्वी पूर्वे[22]—यैस्त्वमतीते[23] काल आगतवानसि । वयाः शाखा वेतेः गत्यर्थस्य । ता हि[24] वृक्षस्य स्कन्धसो[25] जनित्वा[26] तिरश्चीना[27] अन्तरिक्षे गच्छन्ति, 'वातायना भवन्ती'ति-द्वितीयं निर्व-चनम्, वातोऽयनो[28] यासां वातेन याश्चाल्यन्त[29] इत्यर्थ । वातायना[30] -पृषोदरादित्वाद्वाशब्द-स्य ह्रस्वत्वेन[31] ताशब्दस्य च लोपेन नकारस्य च वया उच्यन्ते । यथाऽत्रैतद[32]स्माभिर्दर्शित-

---

१—०शादेव B C
२—बृहन्निति B C.
३—बृहत्ये बृह० A
४—बृहन्मह० A
५—दैवैश्व० C
६—स्वकृत A
७—अय पाठोऽत्राधिको भाति ।
८—प्रत्येषो B
९—नीत्यस्य B C अत्र 'वीत्यस्य' 'वीत्येतस्य' वा युक्त पाठ ।
१०—'विरिरिचे' नास्ति B. C.
११—०रिच्येत् C.
१२—महतत् C. महित्वम् A
१३—'वृक्षस्य नु' इति नास्ति B C
१४—शाखौ एव ते A
१५—स्वभूतसा A.
१६—०भिरूपहुत A ०भिराहुत B
१७—त्वमपि A.
१८—वनमतददति B C.
१९—०रिद्रयात्त्वस्मा० B C.
२०—०स्तृणादिनेत्यर्थ A
२१—'हे' नास्ति A
२२—पूर्वा B. C
२३—यैस्त्व पूर्वम० A
२४—तामि B
२५—कदाचित् 'स्कन्धतो' इति पाठ स्यात् ।
२६—०नित्वात् A
२७—०श्चीनाना B C.
२८—०यन B
२९—०श्चाल्यन्त B
३०—ते वा० B त वा० C
३१—०शब्दह्रस्व० B
३२—०त्रेदमस्मा० B. C

मेवं सर्वत्र निर्वाच्येऽर्थे[1] दर्शिते तद्वचनस्य शब्दस्य वर्णानां पृषोदरादित्वाल्लोपविकार-[2]विपर्ययादिना यथारूपसिद्धिस्तद्दर्शयितव्यम्, ग्रन्थगौरवभयान्नास्माभिर्दर्शयिष्यते । 'शाखाः खशयाः[3] शक्नोतेर्वा'इति। वया इत्यस्यार्थस्य प्रदर्शनार्थमुपात्तस्य शाखाशब्दस्य प्रसङ्गेनैते[4] निर्वचने। शाखा –वृक्षस्य स्कन्धसो[5] जनित्वा[6] ख आकाशे शेरते व्यवतिष्ठन्ते, शक्नुवन्ति च पक्षिण[7] स्वं[8] च पुष्पफल धारयितुम ।

एवं चत्वार उपमार्थीया उक्ता । प्रसंगेन चैषामर्थान्तराण्यपि। इदानी कर्मोप-संग्रहार्थीया –'च, आ, वा,[9] अह, ह, उ'[10] इत्येते षडुच्यन्ते। तेषां सामान्येन तावद्रूपं प्रदर्श्यते–'अथ यस्य'[11]इत्यादिना। अस्य ग्रन्थस्य[12] केनचिट्टीकाकारेण कश्चिदर्थो व्याव-[13]र्णित । तस्मिन् यदि कौतूहल[14] तत्[15] तद्ग्रन्थादेवावगन्तव्यम[16]। वयं त्वस्य यमर्थ[17] व्याख्या-स्याम, तस्य विशुद्धयर्थमिदं[18] तावदाचक्ष्महे-निपात. सर्वे पदाश्रयधर्मप्रतिपादनार्थे[19] । स कश्चिदेकाश्रयस्य[20] धर्मस्य[21] प्रतिपादक –इवादिरूपमानत्वादे[22], कश्चिदनेकाश्रयस्य धर्मस्य प्रतिपादक.[23], वादिः समुच्चयादे.[24] । स एकाश्रयवचनाद्धर्मिशब्दात्पर श्रूयमाणो-

---

१–निर्वचनेऽर्थे B C
२–लोपस्य विकार पर्यया० A
३–शया B खशया C.
४–शाखानि B शाखादि C
५–'स्कन्धतो' इति पाठ. कदाचित्स्यात् ।
६–जनित्वात् A.
७–पक्षेण A.
८–स्वय च B पुष्प च फलं च A
९–'वा' इति नास्ति B C.
१०–'उ' इति कोशेषु नास्ति । परमस्माभि षट्-सख्या संगमनाय लिखित ।
११–'ना' इति नास्ति A
१२–वचनस्य B C
१३–व्याख्यात B C
१४–'तस्मिन् यदि कौतूहलं' नास्ति B C.
१५–म A
१६–तत एवाव० B. C
१७–वयन्तु समस्यार्थ B C
१८–तद्वस्तु शुद्धयर्थमुक्तं तत्तावदा० B C
१९–पराश्रय० A
२०–०देहा० A.
२१–'धर्मस्य' नास्ति A
२२–०दिरूपं मा० A
२३–'प्रतिपादक' नास्ति A.
२४–अत्र A पुस्तके कश्चिदधिकोऽन्यथाभूतश्च पाठो दृश्यते । तथा हि–'समुच्चयविका (चा) रणत्त्व (वि) निग्रहाणामनेकाश्रयत्वात्। समुचविका (चा) रणयोस्तावद्भूयमनेकाश्रयं, विनिग्रहो नियमो-ऽन्यनिवृत्ति ।तस्यापि यन्निवर्त्तकं यच्च निवर्त्यतेताननुभावाश्रय (?) इत्यस्त्यनेकाश्रयता । तद (दा) नेकाश्रयस्य धर्मस्य प्रतिपादक एकस्मा दाश्रयार्थाच्छब्दात्परश्रूयमाणं धर्म समुच्चयादिं प्रतिपादयन्ति (ति)'।

ऽयं धर्मं[1] समुच्चयादिं प्रतिपादयति, तस्य द्वितीयेनाश्रयेण विनानुपपत्तेः। तच्छ्रुतेर्बलीयस्त्वेन तमाक्षिपति। स आक्षिप्तो यद्यपि क्वचित् स्वशब्देनोपादीयते—'अहं च त्वं चे'[2]ति। क्वचिन्न—'इन्द्रश्च विष्णो यदपस्पृधेथामि'[3]ति, तथाप्युभयत्र तस्याक्षेपकत्वाविशेषान्निपात कर्मोपसङ्ग्रह इत्युच्यते। कथम्? कर्थ—अर्थो द्वितीय आश्रय, उपसंगृह्यत आक्षिप्यते य.[4] स उपसङ्ग्रह, कर्म उपसङ्ग्रहो यस्य स कर्मोपसङ्ग्रह। द्वितीयस्याश्रयस्या[5]क्षेपक। एतमर्थम्—अथ यस्येत्यादिना वचनकेन[6] प्रतिपादयति। यस्य[7] निपातस्यागमात् श्रवणादर्थपृथक्त्वमिति[8] भावप्रत्ययान्तमेतत्, तद्वदुपलक्षणार्थम्, 'वत्सांसाभ्यां कामबले'[9] इति यथा। कश्च तद्वान्[10] योऽस्य भावप्रत्ययस्य[11] प्रकृत्यर्थ, कश्चासौ पृथग्भूतोऽर्थ? अत[12] आह—अर्थपृथक्त्वमिति, अस्य[13] पृथग्[14] भूतोऽर्थ इत्यर्थ.। स क[15]? समुच्चयादेर्द्वितीय[16] आश्रय आश्रयान्तरात्[17] पृथग्भूतत्वात्। 'अह विज्ञायते'। अहेति विनिग्रहार्थीय एव शब्देन समानार्थ., 'विज्ञायते' इत्येतस्माच्च परो द्रष्टव्य., विज्ञायत एव। यत्र च स्वशब्देनोपादीयते—'अहं च त्वं चेति'[18]। यत्र च नोपादीयते-'इन्द्रश्च विष्णो'[19] इति, उभयत्र विज्ञायत इत्यर्थ। यदि विज्ञायतेऽर्थ[20], एवं तर्हि कस्यासावेवं[21] तन्निवृत्त्यर्थमाह—'न त्वौद्देशिकमिव'इति। उद्दिशत्यर्थमित्युद्देश[22], तस्मिन् भव औद्देशिक, यथाभिधेयस्तथासौ[23] न भवति, अभिधेयो[24] न भवतीत्यर्थ। तस्माद् विग्रहेण पृथक्त्वात् विग्रहो रूप शरीर-

१—वर्म A C
२—[ऋ. ८। ६२। ११]
३—[ऋ ६। ६९। ८] 'अपस्पृधेथाम्' इति नास्ति A.
४—'य स उपसग्रह, कर्म' नास्ति A
५—'आश्रयस्य' नास्ति A
६—'वचनकेन' नास्ति A वचन तेन B
७—तस्य B C
८—'इति' नास्ति B C
९—[अष्टा० ५। २। ९८]
१०—कश्चित्तद्वा यो० A
११—०त्ययान्तस्य A,
१२—अथार्थपृ० B अतोऽर्थपृ० C.
१३—'अस्य' इति नास्ति A
१४—वृ तोऽर्थय B प्रभूतोथ C
१५—स त B
१६—०तीयमाश्र० A.
१७—०श्रयान्तवान् A
१८—[ऋ ८। ६२। ११]
१९—[ऋ ६। ६९। ८]
२०—विज्ञायर्थे B C
२१—तस्यासावेतन्निवृ० B C
२२—०द्देशशब्द B C
२३—'यथा' इति नास्ति A
२४—०धेयो न भवति न भवती० B C.

मिति पर्याया.[1] । रूपेण पृथग्भूतत्वादित्यर्थ.[2] । समुच्चयो[3] हि यस्यार्थ. स च तदाश्रयरूपेण पृथग्भूत , अतस्तदाश्रयरूप न चास्याभिधेयम्, अभिधेयस्य तु समुच्चयस्य[4] तेन[5] विनाऽनुपपत्तेः । स विज्ञायत[6] ईदृशो यो निपात –'स कर्मोपसङ्ग्रहः' । उदाहरणम्—

चेति समुच्चयार्थ[7] उभाभ्यां समुच्चीयमानाभ्यां सह प्रयुज्यते–'अहं च त्वं चे'ति । अत्र उभाभ्यां संप्रयुज्यत इति ब्रुवन्नन्यत्रैकेनापि संप्रयुज्यत इति गमयति । तद्दर्शयिष्याम' ।

'अहं च०–०रातयः'[8] । प्रगाथस्यार्षम् । अहं[9] च त्वं च हे वृत्रहन् ! वृत्रोऽसुरो[10] मेघो वा, तस्य हन्त ! सयुज्याव-सयुज्यावहै, सनिभ्य आ-सनिर्लाभार्थ , आलाभेभ्य., यावन्मया[11] धनानि लब्धानीत्यर्थ. । कस्मात् ? उच्यते, यस्माद् 'अरातीवा[12] चित्' अदानवानपि-अदानशीलोऽपीत्यर्थ । हे अद्रिव.[13] ! अद्रिर्ग्रावा, तद्विकारत्वाद्वा दारणाद्वा,[14] तद्वन्नौ-[15] आवाभ्यां[16] हे शूर ! अनुमंसते-अनुमंस्यते[17] दानमिति वाक्यशेष । त्वत्संयुक्ताय मह्यं दास्यतीत्यभिप्राय'[18] । कस्मात् ? उच्यते, यस्मात्–भद्रा. कल्याण्यस्तवेन्द्रस्य रातयस्तव[19] दानानि कल्याणान्याश्रितोपकारकत्वाद्[20]तस्त्वत्तः प्रार्थयमानानस्माननुमंस्यत[21] इत्यर्थ. । एकेन सह यत्र[22] प्रयुज्यते, तदवयस्येत्यस्य[23] वचनस्य[24] यथोक्तार्थविवेकार्थ[25] दर्शयाम.[26]–'उभा जिग्य-

१–पर्यया C
२–'इत्यर्थ ' इति नास्ति A.
३–इत आरभ्य 'चास्याभिधेयमि'त्यन्तस्य पाठस्य स्थाने–'समुच्चयाद्धि च शब्दार्थात् तदर्थाश्रयरूपेण पृथग्भूतोऽत समशब्दस्याभिधेय ' इति पाठ. B C
४–स समुच्च० B. C
५–नत्वन वि० B तन वि० C.
६–०ज्ञायन्त C.
७–उभउभाभ्या B. C
८–[ऋ ८ । ६२ । ११]
९–'अह चे' त्यारभ्यैतदन्त पाठो नास्ति B C
१०–वृत्रासुरो A
११–यावत्मासनानि B C. १२–रान्ती० C
१३–०वज्रं B. ०वज्र' C
१४–'तद्विकारत्वा द्वादारणाद्वा' नास्ति B C.
१५–तद्राशनो B. C
१६–अत्र 'सयुक्तनत्या' B 'सयुक्तनभ्या' C इत्यविकृ पाठ । अत्र–'सयुक्ताभ्या' इति पाठो युक्तः स्यात् ।
१७–०मन्यते B C. १८–०तीत्यर्थ B C
१९–'तव' नास्ति B C.
२०–०कारकरणात् परितुष्टात्त्वत्त B. C
२१–०मन्यन A २२–यत. B
२३–तदर्थ यस्येत्यस B. C 'तदा यस्येत्यस' इति वा पाठो युक्त स्यात् ।
२४–वलनकस B वचनकस C
२५–०क्तार्थस वि० A. २६–०यिष्याम A

थुः०–०ऐरयेथाम्'[1] भारद्वाजस्यार्षम[2]। उभौ तावत्सप्रयुक्तौ[3] जिग्यथुः[4], न पराजयेथे–न पराजीयेथे केनचित्, न पराजिग्येन पराजीयते, कतरश्चन-नेदं[5] किमोरूपम्, एकतर-शब्दस्यायं[6] छान्दस एकारलोप, चन[7] शब्दोऽप्यर्थे, एकतरोऽपि[8], एनोरेतयोर्भवतोरिन्द्र-विष्णवो, कि चेन्द्रश्च। यस्य[9] समुदायार्थस्य श्रुते, समुच्चयस्य द्वितीयेन समुच्चीयमानेन विनाऽनुपपत्ते, त्वं चेति वाक्यशेष। इन्द्रश्च त्वं च हे विष्णो[10]! यद्यदाऽपस्पृधेथां स्पर्धेथे[11] शत्रुभि सह, त्रेधा-त्रिशब्दोऽत्रानेकत्वप्रतिपादनार्थः[12], अनेकधा सहस्रं[13] सहस्रमपि शत्रूणां तत्तदैरयेथां[14] विविधमीरयथस्तारापथ[15] इत्यर्थ। एवमत्र चेति समुच्चयार्थ। इन्द्रश्चेत्ये-केन[16] समुच्चयस्याश्रयेणेन्द्रेण सह संप्रयुज्यते, द्वितीयस्तु विष्णुस्तेनाक्षिप्यते।

एतस्मिन्नेव समुच्चयार्थे 'देवेभ्यश्च पितृभ्य आ'[17] इत्याकारः[18]। योऽग्नि' कव्यवाहन'[19], कव्यं[19] पितृदेवत्यं हविस्तस्य वोढा, पितॄन् यक्षत् यजतु, ऋतावृधः-ऋतं[20] सत्यमुदकं यज्ञो वा तस्य वर्धयितॄन्, य इति श्रुते स[21] इत्यध्याहार्यः, इत्, उ इति पदपूरणौ, हव्यानि हवींषि, वोचतु ब्रवीतु, अमुष्य यजमानस्यातानीत्विति[22] तत मन्त्र-देवेभ्यश्च पितृभ्यश्चेति।

---

१–[ऋ ६। ६९। ८]
२–'ऐरयेथाम्। भारद्वाजस्यार्षम्' इति नास्ति B C. अत्र 'भारद्वाजस्यार्षम्' इति युक्त. पाठ स्यात्।
३–तावसप्र० A.
४–जयथः A
५–नेन्द्र B
६–एक शब्दस पर्याय B C
७–न च B
८–एकारोऽपि B
९–समुच्चयार्थश्च शब्द श्रूयते B C
१०–हे इन्द्राविष्णू B C
११–अवस्पन्दर्धेथा B अवस्पर्धेथा C
१२–०ब्दो वानेक मात्र प्रतिपत्त्यर्थ. A
१३–'सहस्र' नास्ति B. C.
१४–तत्र वितदैरयेथा प्रेरयथ' B तत्तदथ्यैरयेथा प्रेरयथ C
१५–नोगयत B C.
१६ ०श्चेत्यनेन A.
१७–[ऋ० १०।१६।११]
१८–इत्ययमाकार' A.
१९–कव्य० C इत्यत आरभ्य 'पितृभ्यश्चेति' पर्यन्तस्य पाठस्य स्थाने–'पितृभ्य आ–पितृभ्यश्च' इत्येतावानेव पाठ उपलभ्यते A एतावान् पाठ-स्त्रुटितो भाति A पुस्तके।
२०–उन्मता वृधा B
२१–'स' इति पद 'अध्याहार्य' इति पदस्यानन्तर पठितम् B
२२–अत्र कदाचित्–'अमुष्य यजमानस्यैतानीति, तत्र मन्त्र'-इति पाठो भवेत्।

वेति विचारणार्थे[1] । विविधा चारणा[2] विचारणा, अनेकं प्रदर्श्य[3] तत्र[4] यथाकाम्यं[5] वचनम् । 'हन्ताहं०—०अपामिति'[6] । लवरूप[7] इन्द्र । अल्पेन सता[8] त्वया कस्माद्बहुसोम पीत ? इत्यृषिभिरभिहित[9] स्वसामर्थ्यमाचष्टे । हन्तेति—संभावनायामनुज्ञायां वा, संभावयतानुजानीत[10] वा । अहं पृथिवीमिमां स्वस्मात्स्थानादुद्धृत्य निदधानीह वेह वा । एकेनेह शब्देनान्तरिक्षं प्रतिनिर्दिश्यतेऽन्येन द्यौ, हस्तौ वा सव्यो दक्षिणं च, स्कन्धौ वा । अन्तरिक्षादीनां यत्र कामयध्वे[11] तत्रेत्यर्थ । कुविद्बहु सोमस्यापां पीतवानहम्, हेतावितिः,[12] हन्तीति पालयत इति यथा । अतो हेतोरतिशयवत सामर्थ्यादित्यर्थ ।

अथापि समुच्चयार्थे भवति ।

"वायुर्वा त्वा[13] मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः ।
ते अग्रे अश्वमायुंजंस्तेऽस्मिन् जवमादधुः[14] ॥"

वाजपेये[15] विनियुज्यते । तत्र रथे नियुज्यमानोऽश्व उच्यते । वायुश्च त्वां[16] मनुश्च त्वां गन्धर्वाश्च[17] सप्तविंशति. । जवं च[18] भूरि[19]वेगं चादधत्विति[20] वाक्यशेष । कस्मात् ? उच्यते, यस्मात्ते, अग्रे-पूर्वस्मिन् काले[21]ऽश्वमायुञ्जन्, त एवास्मिन्नप्यश्वे[22] जवं वेगमादधुराहितवन्त[23] । प्रदर्शनार्थ चेदं वाशब्दस्य विचारणायां समुच्चये चोपादानम्, विकल्प[24]संशयपक्षव्यावृत्त्यावृत्त्यादिष्वपि दर्शनात् ।

---

१—०चारणायामर्थे A
२—विविधावचारणा B C.
३—हे दर्श्य B हदर्श्य C
४—'तत्र' नास्ति A ५—यत्काम्य A
६—[ ऋ० १०।११९।९ ]
७—लवस्येन्द्रस्यार्षमियमित्यर्थ । हैल च रूप B. हैल सरूप C. ८—सत्वा B
९—०षिभिरुक्तस्य B ०षिभिरुक्तस्स C
१०—सभावयामीत्येतदनुजा० A
११—कामयेऽहं A.
१२—इत आरभ्य 'यथा' पर्यन्तस्य पाठस्य स्थाने—'इत हतै. (हेतः C.) वयमिति शब्दः हन्तीति परायत इति यथा' इति पाठो वर्तते B C
१३—'वायुर्वा त्वा' एतावन्मात्र एव प्रतीक B C
१४—[ तै० सं० १।७।७ ] 'वातो वा मनो वा गन्धर्वा०' (मा०य स ९।७)
१५—'वाजपेये' एतावानेव पाठ. C वाजवते B 'विनियुज्यते' नास्ति B C
१६—'त्वा' नास्ति B C १७—गन्धर्वेश्च B
१८—युज च A १९—'भूरि०' नास्ति B C
२०—वेगत्वे यादधतीति B वेग त्वय्यादधति C
२१—'काले' नास्ति A. २२—एव वाद्यास्मिन्नश्वे A.
२३—०राहि भवन्त A
२४—विकल्पक्षणत्वावृत्त्यादिष्वपि A.

अह इति च ह इति च विनिग्रहार्थीयौ । विनिग्रहो नियम[1], नियमार्थीयौ, एवं[2] समानार्थीयौ पूर्वेण संप्रयुज्यते[3] । 'अयमहेदं करोत्वयमिदम्' इति, अह शब्दस्योदाहरणम् । देवदत्तोऽह ग्रामगमनं[4] करोतु यज्ञदत्त ओदनपाकम् । देवदत्त एव ग्रामगमनं[5] करोतु, न[6] यज्ञदत्तोऽपि[7] देवदत्तेन सहेत्यर्थ । 'इदं ह करिष्यति' इति हशब्द[8]स्योदाहरणम् । ग्रामगमनं[9] ह करिष्यति, ओदनपाकं न करिष्यतीति-ग्रामगमनमेव[10] करिष्यति, नोभयं[11] नाप्योदनपाकमेवेत्यर्थ[12] । एते लौकिक उदाहरणे । वैदिकेऽपि, अहशब्दस्य तावत्-'आदह स्वधा०—०यज्ञियम्'[13] । मधुच्छन्दस आर्षम्[14], मारुतीयमृक् । आदित्यथपर्याय[15] आनन्तर्ये, अहेति विनिग्रहार्थीय[16] एवशब्देन समानार्थ । अनन्तरमेव स्वधां-स्वधेत्युदकनाम[*], उदकमनु[17] पश्चात्, कस्य ? सामर्थ्याद्दृष्टेः पश्चादनन्तरमेव तदुदकमित्यर्थ[18] । किं कुर्वन्ति ? उच्यते[19]-पुनर्गर्भत्वमेरिरे । 'ईर गतौ'[20] इत्यस्य ण्यन्तस्येदं रूपम्, पुनर्गर्भत्वं गमयन्ति मरुत[21] । एतदुक्तं भवति-वार्षिकांश्चतुरो मासान् वर्षित्वाऽनन्तरमेवाष्टौ मासांस्तदुदकं रश्मिभि प्रत्याहृतमागामिनि संवत्सरे पुनर्गर्भत्वमापादयन्ति मरुत इति । दधाना धारयन्तोऽन्तरिक्ष आदित्यमण्डले वा[22], उदकनामैतत्, तदेवोदकं यज्ञसंपादि । एवमत्रार्थान्त[23]-रस्यासंभवात् सत्यां च[24] गतावानर्थक्यात् पदपूरणत्वस्यान्याय्यत्वादहशब्दो विनिग्रहा-

---

१—'विनिग्रहो नियमः, नियमार्थीयौ' इति नास्ति B C.

२—एव शब्देन स (सा C) मानार्थौ B C.

३—अत्र 'सप्रयुज्येते' इति युक्त. पाठ ।

४—ग्रामनगर A ग्रामदर्शन B

५—ग्राम नगर A.

६—मा A

७—०दत्तो देवदत्त एवेत्यर्थ B C

८—'०शब्द०' इति नास्ति A

९—०नगर A        १०—०नगरमेव A.

११—'नोभय' नास्ति B C.

१२—०पाक ग्रामगमनमेवेत्यर्थ B. C

१३—[ऋ० १ । ६ । ४] 'यज्ञिय' नास्ति B. C.

१४—'मधुच्छन्दस आर्षम्' नास्ति B C

१५—०दित्ययमथशब्द पर्या० B. C

१६—०र्थीय C.        * (निघ० १।१२)

१७—अत्र 'स्वधामनु' अनुशब्द. पश्चादर्थे' इत्यधिक पाठ B. C.

१८—तामुदक० A

१९—उच्यन्ते A

२०—[धातुपाठे-अदा०, आत्मने० २।८]

२१—इत आरभ्य 'मरुत इति' पर्यन्त पाठस्त्रुटितो भाति A

२२—च A इत परं 'र्नाम' 'नाम' इत्यधिक पाठ B. C

२३—एवमेवार्थान्त० A.    २४—'च' नास्ति A.

र्थीय एवशब्देन समानार्थ इत्युपपन्नम् । ह[1]शब्दस्योदाहरणम्–'नाकस्य पृष्ठे०–०सदा'[2]। दानस्तुति[3], कक्षीवत आर्षम्[4]। नाको द्यौस्तस्य पृष्ठे स्वर्गाख्ये[5] तिष्ठति, अधिशब्दस्तु[6] पाद-पूरण[7] ऐश्वर्ये वा । श्रित[8], तत् क ? य पृणाति देवान् ददाति[9], स ह–स एव देवेषु देवानां मध्ये गच्छति देवो भवतीत्यर्थ । किञ्च तस्मै तदर्थमापो वृष्टिलक्षणा , घृतमुदकनामैतत्, त[10]दुदकमात्मैकदेशभूत[11] वर्षन्ति सिन्धव स्यन्दन स्वभावा[12] वृष्टिलक्षणा[13] पतन्तीत्यर्थ । तस्मा एव[14] चेय दक्षिणा, इड दानं पिन्वते, 'पिवि सेचने'[15] सिचति प्रभूतान्[16] कामान् वर्षति ददातीत्यर्थ । सदा नित्यमेव । अत्राप्यर्थान्तरस्यासम्भवात् पादपूरणस्य[17] चान्याय्यत्वात् ह शब्दो विनिग्रहार्थीय एव शब्देन समानार्थ[18] इत्युपपन्नम् ।

ननु च[19] यौ पूर्वेण सं[20]प्रयुज्येते तौ विनिग्रहार्थीयौ, न चेतौ पूर्वेण संप्रयुज्येते, पूर्वस्याभावात् । कथमभाव ? पूर्वस्योत्तरापेक्षत्वादुत्तरस्य चेहाभावात् । उच्यते–यद्भाष्यकारेण स्वयमेवोदाहरणमुपात्त लौकिकम्–'अयमहेदं करोत्वयमिदम्'इति, तस्मिन् पूर्वेण संप्रयोगं दर्शयितुं 'पूर्वेण संप्रयुज्येते' इत्युक्तम् । न[21] पुन पूर्वेण सह[22] प्रयोगस्याभावे विनिग्रहार्थीयत्वस्याभावोऽभिप्रेतो वेदे, दृश्यमानत्वात्[23] । अथवाऽत्रापि यो नियमेन व्यावर्त्यते

---

१–'०शब्द०' इति नास्ति A
२–[ ऋ० १।१२५।५ ] 'सदा' नास्ति B C.
३–दान संस्तवोऽयम् B C
४–'कक्षीवत आर्षम्' नास्ति B C
५–०ख्येऽविति० A.
६–अविस्तु A अद्वि शब्द० B
७–'पदपूरण ' B C
८–आश्रितस्तं कि च B C
९–'ददाति' नास्ति B. C ✓ (निघ० १।१२)
१०–'तद्' नास्ति A
११–०त्मैकदेशमर्षन्ति A ०मात्मैक दशभूत वर्षाति सिद्धव B.
१२–०स्वाभाविका B स्वभाविका C.
१३–वृष्टि पातयन्ती० B C.
१४–'एव च' नास्ति A
१५–पिवि निवि सेचने A (धातु० भ्वा० ११६१९)
१६–प्रभूतका० A
१७–पदपूरणत्वस्यान्या० B C
१८–०नार्थ इत्यर्थ पपन् B ०नार्थ इत्यर्थ पपन्न C
१९–'च' नास्ति A
२०–'पूर्वेण' इत्यन्त पर 'दर्शयितु पूर्वेण' इत्यन्त' पाठस्त्रुटित B. C.
२१–'न' इति नास्ति A
२२–सप्रयोग० B. C.
२३–अदृश्यमानत्वात् A अस्मिन् पाठे विनिग्रहार्थीयत्वाभावस्यादृश्यमानत्वादिति योजना। अनन्पाठे तु वेदे पूर्वेण सप्रयोगस्याभावेपि विनिग्रहार्थीयत्वस्य दृश्यमानत्वादित्यर्थो बोध्य ।

स भवत्युत्तर.[1] । 'आदह'-अनन्तरमेव कालान्तरेण । य. पृणाति स ह देवेषु गच्छति नान्य[2] इति सामर्थ्याक्षिप्त[3] उत्तरोऽस्ति, तदपेक्ष पूर्वव्यपदेश[4] ।

अथाप्युकार एतस्मिन्नेव[5] विनिग्रहार्थे उत्तरेण संप्रयुज्यते । उदाहरणम्—केषुचित् किंचिदुक्त्वा गतेष्वन्यैरागत्य[6] कस्मिंश्चिदुक्त इदमुच्यते-'मृषेमे[7] वदन्ति सत्यमु[8] ते वदन्तीति' । सत्यमु[8] ते वदन्ति सत्यमेव[9] ते नासत्यं, सत्यं वा ते नासत्यमेव[10] वदन्तीत्येवमयमत्र विनिग्रहार्थीय[11] उकार । एतल्लौकिकमुदाहरणम् । वैदिकं तु-'तमेव ऋषि०—० रराध'[12] । दिव्यस्यार्ष दक्षिणाया वा[13] । दक्षिणासंस्तुतिरेषा । ऋषिर्मन्त्रदृक्[14] । आहुरिति प्रत्येकमनुषक्तव्यम । तमेव ऋषिमाहुर्नान्यम[15], तमेव ब्रह्माणं ब्रह्मा नामर्त्विग्यस्तं[16] च, यज्ञन्यं यज्ञस्य नेतारम[17], यज्ञान्नयतीति यज्ञनीरध्वर्युस्तं[18] च, सामगं साम्नां गाता उद्गाता तं च, उक्थशासमुक्थानि शस्त्राणि तेषां शासिता उक्थशा होता तं च[19] । स ऋषिर्भवति स एवर्त्विग्ब्रह्मादिरित्येवं[20] पूर्वाचार्या आहुरित्यर्थ.[21] । किञ्च[22] स एव शुक्रस्य-शुग्दीप्तिस्तद्वच्छुक्रं ब्रह्मस्वया[23] दीप्त्या दीप्तस्य ब्रह्मण., तन्वो[24] वेद तिस्र.-ऋग्यजु साम लक्षणा', स एव त्रयीविद्भवतीत्यर्थ । य प्रथम[25] सन् जन्मान्तरवर्त्तीत्यर्थ । दक्षिणया दानेन[26] रराधात्मानं

१–क्रोशे 'भवत्युर' इत्येव पाठ । B. C पुस्तकयोस्तु नास्त्येवेद पदम् ।
२–चान्य A
३–०मर्थ्यात् शि० A
४–पूर्वो देश A.
५–एकतास्मि० B
६–गतेष्वन्यै (न्यो B) रागत्य B C
७–तस्मिन्नेव B. C
८–सत्यम्‌ B
९–'सत्यमेव' नास्ति A
१०–'सत्य वा ते नासत्यमेव' नास्ति A
११–०मत्रोकार विनिग्रहार्थीय एव B C
१२–[ऋ० १० । १०७ । ६] 'रराध' इति नास्ति B. C.
१३–एतद्वाक्य नास्ति B. C अस्य स्थाने–'मन्त्र. ब्रह्माणमाहुरिति' इति पाठो दृश्यते कुतश्चिदापतित । B C
१४–०मन्त्राददृक् B ०मन्त्रदृदृक् C
१५–नान्यमत B नान्यतम C
१६–०र्त्विग्वर्ग पश्च A
१७–यज्ञन्य यज्ञस्य नेता B C
१८–अस्य वाक्यस्य स्थाने–'यज्ञसिरध्वर्युस्तत्व' इत्येव पाठ B C
१९–तार्के C
२०–०दिरग्येव A
२१–'इत्यर्थ' नास्ति A
२२–'किञ्च' नास्ति B C
२३–०स्वर्यया B
२४–त्रयो B तयो C
२५–प्रथम स A
२६–दाने A.

संसाधितवान् संस्कृतवानृषित्वादिप्राप्तियोग्यं कृतवानित्यर्थ[1]।

अथापि पदपूरण[2] इति प्रासङ्गिकम्, 'इदमु तदु' इति। अस्योदाहरणम्[3]—'इदमु त्यत्०—०जनाय'[4]। वामदेवस्यार्षम्[5]। इदम्, उ इति पदपूरण', त्यत् तत्पुरुतमं बहुतमं पुरस्तात् पूर्वस्यां दिशि[6] ज्योतिरुष आख्यम[7], कुतः पुरुतमम ? उच्यते-तमस सकाशा-द्वयुनावत्[8] कान्तिमत्, अस्थात् स्थितमुदितमित्यर्थ। स्थित्वा नूनं[9] निश्चयेन दिव आदि-त्येन जन्यमानत्वाद्दिवो दुहितर', एकस्या एव पूजनार्थं[10] बहुवचनं व्यत्ययेन वा। वि-भाती[11] -विविधं दीप्यमाना, गातु कृण्वन्[12] तमांस्यपहत्य[13] गमनं कुर्वन्त्युषसो जनाय जन-स्यार्थाय।

'तदु प्रयक्षतमं०—०चतस्रः'[14]। नौधसमार्षम्[15]। एकवाक्यतायै द्वितीयपादे यद्यपि तथापीत्यध्याहार्यम्[16]। यद्यपि दस्मस्य दर्शनीयस्य शत्रुपक्षक्षयकरस्य वेन्द्रस्य चारुतम-मतिशयेन[17] चार्वस्ति, दंस' कर्म वृत्रवधादि[18], तथापि तदु[19] प्रयक्षतमम, उ इति पदपूरणः[20], 'यक्ष पूजायाम्'[21] तत्[22] प्रकर्षेण पूज्यतमम्, अस्य कर्म यत् कृतं[23] तदुच्यते-उपह्वरे[24] ह्वरति-रत्तिकर्मा, ह्वरो[25] भक्षस्तस्य समीपे सोमपानादनन्तरमित्यर्थ.। अथवा-उपह्वरो[26]ऽन्तरिक्ष-

---

१—सस्कृतत्वादृषि० B C
२—पादपूरणा A.
३—०दाहरणे B C
४—[ऋ० ४।५१।१] 'जनाय' नास्ति B C
५—इद वाक्य नास्ति B. C.
६—'दिशि' नास्ति C
७—आख्य B
८—वायुना० C
९—स्थित्यन्य सूनु B स्थित्वन्य नून C
१०—०नार्थे B C.
११—विभाति B C
१२—कृण्ववन् C 'कृणवन्' इति पाठ' स्यात्।
१३—'तमास्यपहत्य' नास्ति B, C.
१४—[ऋ० १।६२।६] 'तदु प्र' एतावानेव प्रतीकः B. C
१५—इद वाक्य नास्ति B. C.
१६—०पीत्येतदध्या० B. C
१७—०मभिशये० C.
१८—वृत्रवध. B C
१९—'तदु' नास्ति A तदुपय० B
२०—उ पादपू० A.
२१—[धातु०, चुरा०, आत्मने० १०।१५३]
२२—तत. B
२३—इद वाक्य नास्ति A
२४—उपहारे हरतिरत्ति० B * (निघ० २।८)
२५—भक्ष B
२६—गह्वरो (B) उपह्वरो गह्वरो B C.

प्रदेश, तस्मिन् यदुपरा:[1], उपर इति मेघनाम[2] मेघजाति, अपिन्वत्[3]-'पिवि मिवि सेचने'[4][5] असेचयत्[6], मध्वर्णस[7]-अर्ण इत्युदकनाम, मधु स्वादु, स्वादूदका नद्यो[8] नदनाः शब्दकारिणी-[9]श्चतस्रश्चतु संख्याका, अथवा चतस्र इति दिशां प्रति निर्देश., प्रतीति च[10] वाक्यशेष। चतस्रोऽपि दिश[11]. प्रति।

एवमेते कर्मोपसंग्रहार्थीया षण्णिपाता उक्ताः। इदानीं हीत्यादीनां सीम्पर्यन्तानां तावत्सप्तानां निपातानामकर्मोपसङ्ग्रहार्थीयानां प्रसङ्गेनार्था[12] उच्यन्ते। कथं पुनरेषामकर्मोपसंग्रहार्थीयत्वम्? उच्यते[13]-अनेकाश्रय[14]धर्मवचनो निपात कर्मोपसंग्रहार्थीय उक्त[15], न चैते[16]ऽनेकाश्रयधर्मवचना, हेतुत्वादेरेकाश्रयत्वात्[17]।

हीत्येषोऽनेककर्मा। इदं हि करिष्यतीति हेत्वपदेशे। नुशब्दोदाहरणेनैतद्[18] व्याख्यातम्। एतल्लौकिकम्[19]। वैदिकं तु-'इन्द्रवायू इमे०-०उशन्ति हि'[20]। मधुच्छन्दस[21] आर्षम्। हे इन्द्रवायू! इमे सुता अभिषुता[22]. सोमा एतज्ज्ञात्वोपागतमुपागच्छतम्[23]। प्रयोभि प्रकर्षेण यातृभिरश्वै[24]. । अथवा प्रय इत्यन्ननाम[*], अन्नैः सहोपागच्छतम्[25][26], अस्मभ्यं यानि देयानि तान्यन्नानि[27] गृहीत्वेत्यर्थ.। कस्मात्? उच्यते-इन्दवो वामुशन्ति हि, हिशब्दो[28]

---

१-यदुपह्वर B यदुपर C.
२-'मेघनाम' इति नास्ति C (निघ० १।१०)
३-अपिन्वन् A
४-'पिवि मिवि सेचने' इति पाठो नोपलभ्यते A
५-[ धातु० भ्वादि० परस्मै० १।६१९ ]
६-असेचयन् A.
७-अर्णत A (निघ० १।१२)
८-सासोदका नद्या B स्वादोदका नद्या C
९-०कारिण्यश्च० A.
१०-म B C
११-दिश C
१२-०नार्हा B
१३-'उच्यते' नास्ति A
१४-ऐरने० B एरने० C.
१५-'उक्त.' नास्ति B C
१६-एते नानेका० B C.
१७-०रेताश्रितत्वात् B. C अत्र '०रेकाश्रितत्वात्' इति पाठो भाति।
१८-०रणवद्व्या० B C.
१९-०किकमुदाहरणम् B C
२०-[ऋ० १।२।४] 'इन्द्रवायू' इत्येव प्रतीकः B. C
२१-'मधुच्छन्दस आर्षम्। हे इन्द्रवायू' नास्ति B C.
२२-अभिष्टुता B C
२३-'उपागतम्' नास्ति A
२४-'अश्वै.' नास्ति A
* (निघ० २।७)
२५-'सह' इति नास्ति C
२६-०गच्छन्तम् B
२७-देयान्यन्नानि तानि B. C.
२८-हिर्हेत्वोपदशे A.

हेत्वपदेशो, यस्मादेत इन्दव. सोमा वां युवां[1] कामयन्ते युष्मदागमन[2]माशासाना इव[3] तिष्ठन्तीत्यर्थ' ।

कथं हि करिष्यतीत्यनुपृष्टे । इदमपि नुशब्दोदाहरणेनैव[4] व्याख्येयम् ।

कथं हि व्याकरिष्यतीत्यसूयायाम् । असूया-अक्षमा-अमर्ष., देवदत्तः सभायां प्रश्नान्[5] व्याकरिष्यतीत्युक्त अक्षममाण' कश्चिदाह-कथं हि व्याकरिष्यत्यकृ[6]तविद्य इति ।

किलेति विद्याप्रकर्षे । विद्या-ज्ञानम्, तस्य प्रकर्षो नामा[7]तिशय' । किं तर्हि[8] विद्याप्रकर्ष' ? अन्यस्थत्वमन्यै[9]रेतदुपलब्धं मया[10] तेभ्यः श्रुतं न स्वयमुपलब्धमित्ययमर्थो[11] विद्याप्रकर्ष । अस्मिन् 'किले'त्ययं निपात' । लौकिकमुदा[12]हरणम् 'जघान कंसं किल वासुदेवः' इति । वैदिकं तु-'स्वादुष्किलायं०—०आहवेषु'[13] । सौमीयमृक् । गर्गस्या[14]र्षम् । स्वादु[15]मिष्ट किलायं सोम , मधुमान् मधुस्वादुविशेषस्तद्वान्[16], उताय-उतशब्दो[17]प्यर्थे, मधुरो[18]ऽपि किलायम्, तीव्रशब्द[19]स्तीक्ष्णवचन कटुवचनो वा ति[20]क्तरसोपि किलायं कटुकरसो वा, रसवान्-भूम्न्ययं[21] मतुप्, बहुरसोऽपि किलायम्, उतो नु[22] शब्दश्चार्थे, अपि चास्य द्वितीयार्थ एषा[23] षष्ठी, तच्छ्रुते[24]र्वैकदेशमिति वाक्यशेष' । एतं[25] सोमस्य वा सोमस्यैकदेशं स्वांशलक्षणं

---

१—सोमा युवा B C
२—युष्मत्पात माशा० A
३—०सानैव B C
४—०रणवद्व्या० B C
५—प्रश्न करि० A
६—०ष्यकृतं विद्यते इति A
७—नातिशयः A
८—'विप्रकर्ष'' इत्येव पाठ । A
९—०मन्यैरे० C.
१०—मयाभ्यै श्रु० B C
११—०मर्थे C
१२—'उदाहरणम्' नास्ति A
१३—[ ऋ० ६।४७।१ ] 'आहवेषु' नास्ति B C.
१४—गर्भस्या० A इद वाक्य नास्ति B C.
१५—मृष्ट B मृष्ट C किलाय सौम B किलाय सेम C
१६—०द्वान् मधुमान् B C
१७—'उतायमि'ति 'मधुमानि' त्यस्यानन्तर लिखितम् B C
१८—मधुरसोऽपि B C.
१९—०स्तिक्तवमन [ दन C ] कर्मकल (कटुकल C.) मनो वा तिकुरसोऽपि B C.
२०—०तिरिक्त रसो० A
२१—'भूमनिन्दाप्रशसासु नित्ययोगेऽतिशायने । ससर्गेऽस्ति विवक्षाया भवन्ति मतुबादय ' ॥
२२—उतो ननु A
२३—'एषा' इति नास्ति A
२४—श्रुते वैक० A.
२५—एत सोमयस्य वा A

पपिवांसं पीतवन्तमिन्द्रं न कश्चन कश्चिदपि सहतेऽभिवत्याहवेषु संग्रामेषु ।

अथापि न ननु इत्येताभ्यां संप्रयुज्यतेऽनुपृष्टे । समुदायप्रयोगे[1] गम्यमानत्वान्निपातसमुदायस्यानुपृष्टमर्थो[2] नैकस्य[3] निपातस्य[4], प्रसङ्गेन चेदमिह निपात समुदायार्थस्य[5] वचनं[6] तृतीयपादान्ते तस्य वक्ष्यमाणत्वात् । 'न किलैवं ननु किलैवम्'[7] । न किल देवदत्तो ग्रामं गत[8]., ननु किल देवदत्तो ग्रामं गत[8] इति प्रश्नो गम्यते, किं गत[8] इत्यर्थ ।

मेति प्रतिषेधे । मा कार्षीर्मा[9] हार्षीरिति, लौकिकमुदाहरणम्[10] । वैदिकं तु—'मा नो वधीरिन्द्रमा०—०जानुषाणि'[11] । कुत्सस्यार्षम्[12] । मा नो[13] वधी -माऽस्मान् वधी , हे इन्द्र ! मा च परा दा[14] परित्याक्षी , मा च नोऽस्माकं[15] प्रिया प्रियाणि[16] भोजनानि भोजनमिति धननाम, प्रियाणि धनानि प्रमोषीरपहार्षी[17] , आण्डागर्भस्थानि जातमात्राणि वाऽपत्यानि[18] तानि च मा न हे मघवन् ! शक्र[19] ! निर्भेन्निर्भिदो विनीनश इत्यर्थ । मा च[20] न पात्रा पतन्ति गच्छन्ति गमनसमर्थानि यान्यपत्यानि[21] तानि भेत्-भिद , सह जानुषाणि-जानुभ्यां यानि भूमि सनन्ति रिङ्खन्तीत्यर्थ[22] , तानि जानुषाणि तै सहितानि ।

खल्विति च[23] । खल्वित्ययं च[24] निपात[25]. प्रतिषेधे । तथा हि वैयाकरणा अपि स्मरन्ति–

---

१–सप्रयोगे B C
२–०समाहारस्येदमनु० B C.
३–नैरेकस्य B
४–'निपातस्य' नास्ति B C.
५–समाहारार्थस्य B C.
६–तत्तृतीय० A
७–'ननु किलैवम्' नास्ति A
८–गच्छति B C
९–अत्र मध्ये '०का०' इत्यधिक B
१०–'उदाहरणम्' इति नास्ति A
११–[ ऋ० १।१०४।८ ] 'मा नो वधीरिन्द्र' इत्येव प्रतीक B C
१२–'कुत्सस्यार्षम्' नास्ति B C
१३–इत आरभ्य 'हे इन्द्र' इत्यन्तस्य पाठस्य स्थाने–'हे इन्द्र मा नोऽस्मान् वधी.' इति पाठः B C.
१४–मा परि० B C
१५–'अस्माक' नास्ति A
१६–'प्रियाणि' नास्ति A * (निघ० २।१०)
१७–'ममोषी' इत्येव पाठ A.
१८–०त्यान्याण्डानि तानि A
१९–शत्रुभिर्भेत् निर्भमेद विनी० A. शक्र निर्भेत्सीम् C
२०–'च' नास्ति B C
२१–यानि तान्यपत्यानि पात्राणि तानि च भेत् A
२२–गच्छन्ती० A
२३–'च' नास्ति B C.
२४–'च' नास्ति A
२५–निपातार्थ A.

'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा'[1] इति। 'खलु कृत्वा खलु कृतम्'इत्युदाहरणे। अकृत्वा, अकृतमित्यर्थ[2]। एते लौकिक उदाहरणे[3]। वैदिकं[4] तूदाहरणं पर्येष्यं[5] यद्यस्ति क्वचित्।

अथापि पदपूरणः। एवं खलु तद्बभूवेति। एतल्लौकिकमुदाहरणम्[6]। वैदिकं तु—'मित्रं कृणुध्वं०—०अस्तु'[7]। अक्षसूक्तमियमृक्, मौजवान्ऋषि[8]. कवषो वाऽक्षानाह। मित्रं मां[9] कृणुध्वं कुरुध्वं[10], खल्विति पदपूरण, मृडत[11] सुखयत च नोऽस्मान्, मा नोऽस्मान्[12] प्रति घोरेण व्यसनेन चरत, शुद्धोऽपि[13] चरतिरत्रोपपूर्वार्थे[14] द्रष्टव्यः, उपचरत[15] उपगच्छत। अभिधृष्णु-तृतीयार्थे प्रथमा[16]—अभिधृष्णुनाऽभिभवित्रा सर्वार्थानामस्माकं[17] घोरमक्षव्यसनं कार्ष्टेत्यर्थ[18]। किं तर्हि वो युष्माकं नु क्षिप्रं मन्यु क्रोधो निविशतामातिष्ठतु[19], अरातिः-द्वितीयार्थे प्रथमा[20], अरातिमस्मच्छत्रुमस्मच्छत्रवे क्रुध्यत[21] मास्मभ्यमित्यर्थ। क्रुद्धेषु च[22] युष्मास्वन्योऽस्मत्तोऽस्मच्छत्रुर्बभ्रूणां बभ्रुवर्णानां युष्माकं प्रसितौ[23] 'षिञ् बन्धने'[24] प्रकर्षेण बध्यते येन व्यसनेन तत्प्रसिति[25] तस्मिन्, नु क्षिप्रमस्तु-अन्यस्यास्मच्छत्रोरक्षव्यसनमस्तु[26] मास्माकमित्यर्थ[27]।

---

१—[ अष्टा० ३।४।१८ ]
२—०कृत इत्य० B. C
३—'लौकिके' इत्येव, 'उदाहरणे' नास्ति A.
४—वैदिके A.
५—०हरणे पर्येष्ये पद्यस्ती (यदि स्त) A
६—'उदाहरणम्' नास्ति A
७—[ ऋ० १०।३४।१४] 'मित्र कृणुध्व खलु' इति प्रतीक B C
८—०वान्नामर्षि कषो B C
९—'मा' नास्ति B C
१०—'कुरुध्व' नास्ति A
११—'मृडयत' इत्यत्राधिक पाठ. A
१२—'नोऽस्मान्, मा' नास्ति A.
१३—०रता तुद्धोविच० B. C.
१४—०पूर्वोऽर्थैर्द्दश्य A
१५—'उपचरत' नास्ति A
१६—प्रथमैषा B C.
१७—०र्थानस्माक A
१८—माकृष्टेत्यर्थ A
१९—०शेतामति० B.
२०—प्रथमैषा B C
२१—क्रुध्यते A
२२—कुलेषु युष्मास्वन्यो बभ्रूणा बहुवर्णा० A
२३—प्रसतोषि B. C
२४—[ धातु०, स्वादि, क्रयादि०, उभय० ५।२ ]
२५—तस्य सिनि. A
२६—अन्यस्माच्छत्रो० A.
२७—नोऽस्माक० B. मनास्माक० C.

शश्वदिति विचिकित्सार्थीयो भाषायाम्[1]। विचिकित्सेति[2] यद्यपि[3] लोके सदेह उच्यते, धर्मे न विचिकित्सा कार्या, वेदवचने[4] का[5] विचिकित्सेति, तथापीहोदाहरणेष्वसंभवान्न सन्देहो विचिकित्सोच्यते। किं तर्हि? निश्चय। अस्तमित शश्वदादित्य उदेति, जातस्य च[6] शश्वन्मृत्यु, निश्चयेनेत्यर्थ। अयमेव शश्वदेवम् इत्येवं शब्देन परत्र[7] प्रयुज्यमानेन युक्तोऽनुपृष्टे वर्त्तते, एवं[8] शश्वदिति पुरस्तात् प्रयुज्यमानेनास्वयंदृष्टे। शश्वदेवं गतो देवदत्त इत्युक्ते प्रश्नो गम्यते-किं गतो[9] देवदत्त? इति। पृष्टो यदा ब्रवीति एवं शश्वदिति, तदा[10]ऽस्वयंदृष्टता गम्यते, अवश्यं गतो न मया गच्छन्[11] दृष्ट इत्यर्थ.। प्रासङ्गिक चेदं निपातसमाहारार्थवचनम्, तस्य तृतीयपादान्ते वक्ष्यमाणत्वात्। एवमेतल्लोकेऽर्थत्रयम्[12]। वेदे तु शश्वदिति बहुनाम पठितम्। नित्यत्वे च प्रयुज्यमानं दृश्यते। 'शश्वदिन्द्रः०—०अदात्'[13]। शुन शेपो यूपे[14] बद्ध इन्द्रं तुष्टाव, तस्मा इन्द्र[15] स्तूयमान प्रीतो मनसा हिरण्यरथं ददौ, तमेतया प्रतीयाय[16]-'शश्वदिन्द्रः' इति। स नो हिरण्यरथमिति तच्छ्रुतेर्यद[17]ध्याहार्यम्। य[18] शश्वन्नित्यमिन्द्र' पोप्रुथद्भि—'प्रुथ पर्याप्तौ'[19] पर्याप्त समर्थीभाव, अत्यर्थ समर्थैरश्वैर्जिगाय जयति, नानद्भिरत्यर्थ शब्दं कुर्वद्भिर्हेषद्भि[20]रित्यर्थ.। शाश्वसद्भिरत्यर्थ[21] श्वसद्भिश्च शीघ्रगतित्वात्, धनानि शत्रूणाम्, स नः संप्रदाने[22] चतुर्थी,

---

१—'०याम्' इति त्रुटित B C
२—०त्सेऽपि B.
३—'यद्यपि' नास्ति A
४—देववचने A
५—कारि B
६—'च' नास्ति B. C
७—परस्तात् B C इतः पर 'प्रयुज्ये'त्यारभ्य 'अस्वय दृष्टता गम्यते' इत्यन्त पाठो भ्रमाद् द्विधा लिखित B C
८—इत आरभ्य 'शश्वदेव गतो' इत्यन्तः पाठस्त्रुटित B C.
९—'किं गतो' नास्ति A
१०—कदा B.C.
११—'गच्छन्' नास्ति B C.
१२—तयम् C * (निघ० ३।१३)
१३—[ऋ० १।३०।१६] 'अदात्' नास्ति B C
१४—यूपबद्धे A यूपे बन्व C
१५—तस्मादिन्द्रः A
१६—प्रीताय B
१७—तच्छब्दश्रुतेर्यच्छब्द अध्याहार्य B C
१८—'य.' नास्ति A
१९—अय धातुर्धातुपाठे नोपलभ्यते। Cf 'प्रथ प्रख्याने' इति तु भ्वादौ चुरादौ च दृश्यते। प्रोथ पर्याप्तौ। भ्वादि १।९१९.
२०—०र्हेषितृभि० B C
२१—०त्यर्थ C.
२२—०दान एषा B. C.

अदादिति व्यवहितेनाख्यातेन सबध्यतेऽस्मभ्यमदात् । हिरण्यरथं हिरण्मयं[1] रथं दंसनावान् 'दसि दंशनदर्शनयोः'[2] दर्शनीयत्वाद्[3] दंसनावान् रूपवान्,[4] अथवा दंसन[5] इति कर्मनाम,[*] तद्दर्शनात्तेनानुगतो[6] दसनाशब्द[7] कर्मनामैव, रूपवान् कर्मवानित्यर्थ,[8] किञ्च स एव न सर्वविधुरेषु[9] सनिता संभक्ता, किञ्च सनये स निर्लाभो[10] जीवितस्य तस्मा[11] अपि स एव नो जीवितमस्मभ्य[12] स एव दास्यतीत्यर्थ ।

नूनमिति[13] विचिकित्सार्थीयो भाषायाम् । अस्तमित आदित्यो नूनमुदेतीति ।

उभयमन्वध्यायम्, विचिकित्सार्थीयश्च पदपूरणश्च । यस्यामृचि[14] विचिकित्सार्थीयस्तामुदाहरिष्यन्नर्थाभिव्यक्त्यर्थमस्या पूर्व तावदितिहासमाचष्टे-अगस्त्य इन्द्राय इत्यादि[15] । अगस्त्यो हविर्निर्वापकाल[16] इन्द्राय हविर्निरूप्य संप्रदानकाले मरुद्भ्यः संप्रदित्सांचकार, संप्रदित्सा सम्यक्[17] प्रदातुमिच्छा, तया[18] तत्पूर्वकत्वात् संप्रदानं[19] लक्ष्यते, मरुद्भ्य संप्रददावित्यर्थ[20] । स इन्द्रो मरुद्भ्य प्रत्ते तस्मिन् तत्र[21] एत्य परिदेवयांचक्रे ।

"न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं विनश्यति ॥"[22]

नूनं[23] निश्चयेन नास्ति, अद्य मम[24] हविरिति वाक्यशेष । नो नापि श्वः, यतः

---

१–हिरण्यमय A.
२–[ धातु० चुरा० आत्मने० १०।१३७ दसि दर्शनदशनयो ।]
३–दसनीयत्वाद् A ४–'रूपवान्' नास्ति B. C.
५–अथ ददस (अदसा C.) दसय इति B C.
* (निघ० २।१)
६–दर्शनात्तदेकदेशेन दसिनानुगत B. C.
७–०शब्दोपि B. C ८–०वान्वेत्य० B C.
९–०विविरेषु B C
१०–किन्तु सन य (C.) सन्न स निर्लो(र्ला C )भो B. C.
११–तस्मादपि B. C.
१२–०मप्यस्माक स वे दास्य० (ध्य C.) B. C.
१३–अदानमिति B.
१४–तथास्याश्चिकित्सार्थीयस्त्वमुदा० B. C.
१५–एष प्रतीको नास्ति B C.
१६–'हवि.' नास्ति B. C
१७–सप्रदानेच्छा B C.
१८–तया तु तत्पू० B C.
१९–'सं०' नास्ति B. C.
२०–इद वाक्य नास्ति B C.
२१–'तत्र' नास्ति B C.
२२–[ ऋ० १।१७०।१ ]
२३–न नून निश्चयेनास्ति B. C.
२४–मे B, मा C.

कस्तद्वेद यद्भुतमभूतमिवासीदित्यर्थः[1]। कस्मात्[2] ? उच्यते—यस्मादन्यस्य चित्तमभि-[3] संचरेण्यमभिसंचरणस्वभावकं चलमित्यर्थ[4]। यत उताधीतं-उतशब्दोऽप्यर्थे, अधीत-शब्दाच्च[5] परो द्रष्टव्य', अधीतमप्याध्यातमपि मयाद्यतनं हविर्विनश्यति। 'वर्तमानसामीप्ये वर्तमानवद्वा'[6] इति भूते[7] लट्, विनष्टं मह्य[8] न दत्तमित्यर्थः।

भाष्ये—न नूनमस्त्यद्यतन, नो एव श्वस्तनम् इत्युभयमप्यर्थ[9]विवरणम्, शैषिक-प्रत्ययरहितस्य केवलस्य श्व शब्दस्य श्रुतेस्तत्सामान्याच्च[10] वाक्यशेषाध्याहारस्याप्यत्रै-[11]तावत एव न्याय्यत्वात्। अद्यास्मिन्[12] द्यवि-द्युरित्यह्नो नामधेयम्,तद्धि रश्मिसंबन्धाद् द्योतते[13], सत इत्युपात्तं कारकपरिग्रहार्थम्[14], द्योतत इति एवं सतः कर्तृकारकेन[15] युक्तस्य सत कर्तृकारके न कारकान्तर इत्यर्थ.। एवं यमयोश्चिदिदिति सत इत्यादावपि सर्वत्र निर्वचनेन सत इत्येतद् व्याख्येयम्। श्व उपाशंसनीयः कालः, श्व इत्यागाम्यहरनन्तर-मधिकरणभूतमुच्यते, तदा शंसनीयामनन्तरामरणस्यापि संभवात्। अतीतमनन्तरमहः सत. सामान्येन प्रसक्तस्येदं निर्वचनम्—ह्यो हीनः काल इति। आदिवादौ भिन्ना-दित्यगृह्यत्क्वबन्धादिदर्शनम्। अन्यः पुत्रादि. सर्वो नानेय आत्मत्वेन, 'आत्मा वै पुत्र नामासि'[16]इत्यपदिष्टोऽपि नात्मत्वेन ग्राह्य इत्यर्थ। शिष्टं भाष्यं निगदव्याख्यातम्।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां

षष्ठस्य द्वितीय पाद।

---

१—यद्भयस्त (यद्भ्यत C ) भूत (अभूत C ) माग-मागामीत्यर्थ' B. C.

२—अस्मात् A C

३—०मति सवरेण्य० A.

४—बल० A

५—शब्द च B

६—[ अष्टा० ३। ३। १३१ ]

७—भूतलम A

८—त वदमि०

९—'अपि' नास्ति A

१०—०न्यशेषा० A ०चवाकाशे० B

११—०हार:। अत एव तत एवA ०स्याप्यद्येताष० C

१२—'न् द्यवि' इत्यारभ्य ७१ पृष्ठ 'उपबन्व प्रत्यय उच्यते' इत्यन्त पाठस्त्रुटित प्रमादाद्वा न लिखित B C.

१३—कोशे-'द्योतन्ते' इति पाठ.।

१४—कोशे—'०ग्रहाय' इति पाठ।

१५—कोशे—'०कारणेन' इति पाठः।

१६—गो० गृ० सू० २, ८, २१.

"नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः"[1] ॥

गृत्समदस्यार्षम्[2]। नून पादपूरण.[3]। सा–तच्छ्रुतेर्यस्यार्थसम्बन्धो[4] यच्छब्दोऽध्याहार्य । यां त्वया यज्ञं कुर्वन्निह दापित सा ते तव स्वभूता, चतुर्थी वैषा, वरं प्रार्थितमर्थं[5] जरित्रे स्तोत्रे मह्यं प्रतिदुहीयत्[6] प्रतिदुग्धां प्रतिपादयत्वित्यर्थ । हे[7] इन्द्र ! दक्षिणा मघोनी मघेन धनेन रायो[8] भूतेन तद्वती। किञ्च शिक्ष सर्वदैव त्वं देहि, स्तोतृभ्य. कामान्, मा चातिधक्[9]-अतीत्युपसर्गश्रुतेर्योग्यसाधनयुक्तं[10] क्रियापदमध्याहार्यम्, धगितीदं पदं दहेर्दानार्थस्य[11] रूपम, मास्मानतिहाय[12] अन्येभ्यो दा प्रथममस्मभ्यं देहि पश्चादन्येभ्य[13] इत्यर्थः। भगो नो धनं च नोऽस्तु इति वाक्यशेषः। बृहत्[14]-महच्चोर्जितं दीयतां भुज्यतामित्यादि वाक्यमन्यच्च वदेम, विदथे यज्ञे[15] सुवीरा' सुपुत्राश्च[16] स्यामेति वाक्यशेष'। यदि पुत्रा न सन्ति तत' शोभनत्वविशिष्टानां[17] तेषामपीयं प्रार्थना। अथ यदि सन्ति ततः शोभनमात्रस्य[18]। तेषां भाष्यमृग्व्याख्यानेन व्याख्यातम्। यद्वन्निगदव्याख्यानं[19] तत्सर्वत्र[20] न व्याख्यायते, इतरद् व्याख्यायते, ग्रन्थगौरवभयात्[21]। तत्[22] स्वयमेव ज्ञायमानत्वाच्च।

मघमिति धननाम मंहतेर्दानकर्मणः। तद्धि[23] दीयते। दक्षिणा दक्षतेः समर्द्धयतिकर्मणः, व्यृद्धं समर्द्धयतीति। का व्यृद्धि ? कर्मणः[24] परार्थत्वाद् ऋत्विजां तत्रावृत्ति-

१–[ ऋ० २। १६। ९ ]
२–०स्या नूष C.
३–नूनमिति पद० B C.
४–०तेर्योग्यार्थ० B C
५–०मर्थ B C ६–प्रत० B
७–'हे' नास्ति B.
८–वयोभूते० B C.
९–मायातिथ A १०–अत्युपसर्गे B
११–०र्दानास्य A ०र्थमस्य B
१२–नास्मानतीहायोऽन्ये B मास्मान्तीहा० C
१३–पञ्चजनेभ्य A
१४–०बृहद्वन् B C
१५–वेदने य० B. C
१६–सुपुत्रस्याश्वस्या० B सुपुत्राश्वस्या० C
१७–०विषशिष्य० C
१८–०भनत्वमा० B
१९–यच्च निग० B C
२०–तत्सर्वं B C २१–०वतया A.
२२–'तत्' नास्ति B C अत्र 'तस्य' इति युक्त पाठ स्यात्। ⁄ (निघ० २।१०)
२३–'तन्वि' A.
२४–'कर्मण.' नास्ति B. C,

स्तां दक्षिणा व्यावर्त्तयति । तत्तृष्णया[1] तेषां तत्र प्रवृत्ते । अपि वा दानकाले[2] दक्षिणस्यां[3] वेदिश्रोण्यामग्रेण[4] गार्हपत्यं जघनेन सदो दक्षिणा आनीयन्ते । तत. प्रदक्षिणागमनाद्दिशं दक्षिणाम् अभिप्रेत्य तत्संबन्धाद्दक्षिणेति[5] । दिक्पुनर्हस्तप्रकृतिः[6]-हस्त प्रकृतिर्यस्यासौ हस्त-प्रकृति , प्रजापतेर्हि प्रजा सृष्ट्वा[7] प्राङ्मुखस्य दक्षिणो हस्तो यतो बभूव सा दक्षिणहस्त-सम्बन्धाद्दक्षिणा । दक्षिणः पुनर्[8]हस्तो दक्षतेरुत्साहकर्मणः । स हि-उत्साहवत्तरः सव्यात्[9] । दाशतेर्वा[10] स्याद्दानकर्मणः । तेन हि दीयते यद्देयम् । हस्तः[11] पुनर्हन्तेः स हि प्राशुः क्षिप्रो हननेऽन्यस्मादङ्गात् । देहि स्तोतृभ्य इत्याद्युक्तार्थः[12] । परिवृढं भवति 'बृह बृहि वृद्धौ' परिवृद्धं वीरवन्तः कल्याणवीरा वा-शोभनत्वविशिष्टानां वीराणामियं प्रार्थना शोभनत्व-मात्रस्य वा तेषामित्यर्थः । वीरो वीरयति विविधमीरयति प्रेरयति अमित्रान् वेतेर्वा स्या-द्गतिकर्मणः, गच्छत्यमित्रान् प्रति वीरयतेर्वा, शूरवीर विक्रान्तत्वात्[13] ।

सीमिति निपातो परिग्रहार्थीयो[14] वा पदपूरणो वा ।

'प्र सीमादित्यो असृजत्०—०परिज्मन्'[15] । गृत्समदस्य तत्पुत्रस्य[16] वार्षम् । प्रसीम्-सीमिति पादपूरण परिग्रहार्थीयो वा, यदा परिग्रहार्थीयस्तदा विशेषस्यानुपादानात् सर्वत्रादित्योदिते[17] पुत्रो घृणि[18] प्रासृजत्, एष[19] 'वि' इत्येतस्य स्थाने-विसृजति रश्मीन्, विधर्त्ता विधारयिता तेषामेव कृत्स्नस्य वा जगत., ते च विसृष्टा ऋतमुदकं* भूमिरस-लक्षणमादायेति वाक्यशेष । सिन्धवो रश्मयो वरुणस्य सकाशादिति वाक्यशेष ।

---

१—तत्तृपुया A
२—अभिवादन० B अभिवादान० C
३—०स्या B. C.
४—०ण्या अग्रे० B C
५—०द्दक्षिणा दक्षिणेत्युच्यते B C.
६—इत आरभ्य हस्तप्रकृतिपर्यन्त पाठो नास्ति C
७—सृजतः B C
८—'पुन ' नास्ति B C
९—०र ह्यात् B
१०—०र्वाक्याद्दा० A
११—'हस्त.' नास्ति A.
१२—०क्तार्थम् B. C
१३—'शूर वीर विक्रान्तौ' इति धातुपाठे चौरादिक आत्मेनभाष ।
१४—'विनिग्रहा०' A
१५—[ ऋ० २।२८।४ ]
१६—०स्य वा कूर्मस्यार्षम् B C
१७—०र्वत आदि० B C
१८—'पुत्रो घृणीन्' इत्येव पाठ सगच्छते घृणय किरणा ।
१९—प्रेत्येष B C
* (निघ० १।१२)

यन्ति गच्छन्ति न च श्राम्यन्ति[1] न च कदाचिदप्येतत्कर्म विमुञ्चन्ति । एते वयो न पक्षिण इव[2] पप्तुर्गच्छन्ति रघुया लघ्व्या शीघ्रया गत्या, परिज्मन्[3]-अञ्जेरिदं रूपम्, सर्वतोऽञ्जन्तो गच्छन्त इत्यर्थ ।

एवमेषां हीत्यादीनां सीम्पर्यन्ताना निपातानां सप्तानां प्रसङ्गेनार्था उक्ताः । इदानी प्रसङ्गेनैव "सीमतः" "त्व" इत्येतौ किं निपातावुत नामपद इत्येतदुच्यते । सर्वत्र सीमत इत्यस्य निपातत्वं तावदाश्रित्याह–'वि सीमतः[4] सुरुचो वेन आवः[5]' इति । अयं वाऽन्यो[6] निपात. परिग्रहार्थीयो वा पदपूरणो वेत्यर्थ ।

'ब्रह्मजज्ञानं०–०विवः'[7] । नकुलस्यार्षम् । ब्रह्मेत्यादित्य उच्यते, परिवृढत्वात् सर्वस्य[8] जगतो भरणात्, जज्ञानं जायमानमुत्पद्यमानमन्यस्मात् सर्वस्मात् प्रथमं पुरस्तात् पूर्वस्मिन् काले सृष्टिकाल इत्यर्थ' । अथवा जगन्मात्[9] प्रत्यहमादित्यस्योदयो य' स्वोभि[10]-प्रेत., पुरस्तादित्यपि दिग्वचनम्, आदित्यः प्रत्यहमुद्यन् प्रथमम[11]स्यां दिशि, सीमत इति पदपूरण. परिग्रहार्थीयो वा, सीमत[12] इत्यस्य वा पर्यायः-मर्यादातः सीमेति च मर्यादा उच्यते, तस्मात्पञ्चमी ह्रस्वत्वं च सीमत इति पञ्चमीश्रुतेः सामर्थ्यादभिविध्यर्थे अत्राध्या[13]-हार्य , सर्वतो या मर्य्यादा रश्मीनामातत इत्यर्थः । सुरुच' सुदीप्तान् रश्मीन् वेनः का-न्तरुचि[14]र्व्यावः-विवृतानकरोत् करोति वा, न च केवलान् रश्मीन्, किं तर्हि ? स बुध्न्या – बुध्नमन्तरिक्षं तस्मिन् भवा बुध्न्या दिशस्ता अपि, उपमा उपम इत्यन्तिकनाम[15] सन्निकृष्टा अस्यैवादित्यस्य, अथवा–उपमा उपमात्रीरस्य[16] कृत्स्नस्य वा जगत', विष्ठाः-विष्टभ्यावस्था[17]-

१–शाम्यन्ति B C
२–एव A
३–परिश्मन् A
४–'विसीमत ' नास्ति A.
५–[ वा० सं० १३।३ ]
६–चान्यो B C
७–[ वा० स० १३।३ ]
८–०स्य वा ज० B C
९–अत्र 'जगन्मातु' इति पाठ स्यात्, जगन्मिनोतीति कर्त्तरि तृच्, जगन्मातुरादित्यस्येत्यर्थः । जनमात्र B C
१०–यस्सोऽभि० B. C
११–प्रथम पूर्वस्या B C.
१२–सीमा B C
१३–०आडत्रा B C
१४–कान्त कुची B. C 'कान्तरुची.' इति युक्त पाठो भाति ।
१५–उपमा आत्य० A (निघ० २।१६)
१६–०पनिर्मात्री B. C
१७–०भ्यासस्था० A.

त्री सतश्च योनिमसतश्च यावत् किंचित् सदसद्वा तस्य योनिभूता विवो विवृता अकरोत् करोति। यतोऽसावुदेति सा प्राची, ततोऽन्या दक्षिणा प्रतीची चोदीची च। एवमादित्य उदयेन विवृतादिवाकरोति[1]।

अपि वा सीमित्येतन्नामपदं[2] न निपात इत्याचष्टे-सीमेत्येतत् प्रातिपदिकम्[3] अनर्थकं पञ्चमीकर्माणमिति वचनात् पञ्चम्यर्थादतोऽनर्थकमित्येवमेतद्[4] द्रष्टव्यम्। प्रकृते समीपे बध्यमानत्वादुपबन्ध[5] प्रत्यय उच्यते तम्, आददीत पञ्चमीकर्माणम्, पञ्चम्या[6] कर्म कर्म यस्य, उष्ट्रमुखवदुत्तरपदलोपी बहुव्रीहिसमास[7], तं पञ्चमीकर्माणं पञ्चम्यर्थवृत्तिमित्यर्थ। 'प्रतियोगे पञ्चम्यास्तसिः'[8]इत्ययं तसिः[9]। अथवा[10] प्रतियोगस्यापादानस्य चाभावात्'तत् प्रकरणे आद्यादिभ्य[11] उपसंख्यानम्'[12]इत्येवमत्र तसिर्द्रष्टव्य[13]। सीमा मर्य्यादा, सा हि[14] विषीव्यति विशब्दो[15] विगमे सीव्यति सन्तानार्थे[16], 'षिवु तन्तुसन्ताने'[17] इति। विगत[18]-सन्तानौ विच्छिन्नसन्तानौ[19] ग्रामलक्षणौ क्षेत्रलक्षणौ वा[20] देशौ करोति।

त्व इति विनिग्रहार्थीयम्[21] एकशब्दपर्यायं सर्वनाम, वैय्याकरणसंज्ञाकथनं चेदम्। अथवा सर्वस्यार्थस्य[22] नाम, एक शब्द पर्यायभूत सर्वत्रार्थे वर्त्तते, न क्वचिन्न[23] वर्त्तत इत्यर्थः।

अनुदात्तमिति स्वरकथनम्।

---

१–अत्र 'विवृता इव करोति' 'विवृता इवाकरोति' इति वा पाठ साधीयान् भाति। दिश इति शेषः। आदित्य उदयेन सर्वं प्रकाशयन् दिशो विवृता इव करोतीत्यर्थ। ०येन दिशो विवृता करोति B. C

२–सीमेत्ये० B C. ३–प्रतिपादम० A.

४–०दन्येनानर्थ० B C

५–वध उपबन्व प्र० A.

६–'पञ्चम्या.' नास्ति A.

७–'बहुव्रीहि' इत्येव पाठ B C.

८–'तसि.' इति नास्ति B C [अष्टा० ५।४।४४]

९–तर्हि B.

१०–'अथवा' नास्ति B. C.

११–'०द्या०' इति नास्ति A

१२–[अष्टा० ५।४।४४ सूत्रे वार्त्तिकम्] तत्र 'तत्प्रकरणे' इत्यस्य स्थाने 'तसि प्रकरणे' इति पाठ.।

१३–०त्येव द्रष्टव्यम् B १४–सापि B.

१५–विशिष्टो विशमे B विशिष्टो विगमे C

१६–सन्तार्थ. B

१७–[धातु० दिवा० परस्मै० ४।२]

१८–विनत० B. १९–विच्छिन्नौ B C.

२०–'क्षेत्रलक्षणौ वा' नास्ति B C

२१–र्थीय एकशब्दस्य पर्याय B C

२२–सर्वार्थस्य B C

२३–क्वचिन्निवर्त्तत इत्यर्थ. A.

अर्धनामेत्येके, तदुपरिष्टाद्वक्ष्यामः-'त्वो नेम इत्यर्द्धस्य'[1] इत्यत्र मन्त्रे[2] युक्तविनिग्र-[3]हार्थीय· । अर्धनामेति वाक्यार्थमालोच्य[4] यद्यत्र संभवति तत्तत्र वक्तव्यम[5] । विनिग्र-हार्थीयमुदाह्रियते—

"ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां वि मिमीत उ त्वः ॥"[6]

बृहस्पतेरार्षम् । ऋत्विक्कर्मणां विनियोगमाचष्ट इति समस्तार्थकथनम्, विनि-योगः प्रतिनियम । एक ऋत्विगिदं कर्म करोत्यन्य इदमन्य इदमिति, ऋचां[7] पोषमिति[8] यथाविधि कर्मणि प्रयोगं[9] पुपुष्वानिति च सामान्यपुषेरवयवपुषि कर्म गोपोषं[10] पुष्यति रयिपोषं पुष्यतीति यथा, ऋचां पोषं पुपुष्वान् कुर्वन्[11], ऋचो यथाविधि कर्मणि[12] प्रयुञ्जान इत्यर्थ· । त्व[13] एक आस्ते होता, गायत्रं साम त्व[13] एव उद्गाता गायति[14] शाक्वरीषु ऋक्षु । ब्रह्मा नाम त्व[13] एक ऋत्विग्वदति जातविद्यां[15] जाते[16] प्रायश्चित्तेयास्य विद्या तां, यज्ञस्य मात्रां यज्ञे[17] या या मीयतेऽभिषवग्रहणादिकया क्रियया सा यज्ञस्य मात्रा तां विमिमीते करोति । उ[18] इति पदपूरण । त्व[19] एकोऽध्वर्युः । ऋगर्चनी[20] तया ह्यर्च्यन्ते स्तूयन्ते देवता· । गायत्रं

---

१-[ निरु० ३।२० ]
२-इति मन्त्रेषु B C.
३-क्वचिदग्रहार्थीयस्त्वार्धे ( क्वाध C ) नामे० B. C. मूले-'युक्तो विनि०' इति 'उक्तो विनि०' इति वा पाठो युक्तः स्यात् ।
४-वाक्यमालो० B
५-तत्रैव (नास्ति C ) विवेक्तव्यम् A
६-[ ऋ० १०।७१।११]
७-ऋचात् B.
८-'इति' नास्ति A.
९-प्रयोग B
१०-नो पुष पुष्यतीति यथा A.
११-मुष्यन् कुर्वन् A.
१२-'कर्माणि' नास्ति B C
१३-क्व B
१४-उद्गायति A
१५-जातविद्या B. C
१६-जाते जाते प्राय० B C
१७-इत आरभ्य 'करोती'त्यन्तस्य पाठस्य स्थाने 'यज्ञो यय' (या C) मित्ययतेभिषे ( ष C ) व पवनग्रह ('ग्रह' नास्ति B ) ग्रहणादिकया क्रियया सा यजस्ये मात्रा विमिषितमिते (विमिमीते C ) करोति' इति पाठोऽस्ति B. C.
१८-उः पाद० A
१९-क्व B
२०-अस्य वाक्यस्य स्थाने-'ऋत्विगर्चनीयतया अभ्यर्च्यन्ते तपन्ते देवता' इति पाठ. A.

गायतेः स्तुतिकर्मणः। साम्ना हि स्तोत्राऽङ्गभूतेन स्तूयन्ते[1] देवता। ब्रह्मा सर्वविद्य इति ब्रह्मण स्वरूपकथनम, स हि सर्वं वेदितुमर्हति, सर्वस्य[2] ऋक्तो यजुष्ट सामतो वा यज्ञस्यापत्तौ[3] तेन प्रायश्चित्तस्य कर्त्तव्यत्वात्। ब्रह्मा परिवृढः परिवृद्ध श्रुतत इति निर्वचनम्। अन्य ऋत्विज एकविद्या, ब्रह्मा तु त्रयीविद्य, अत स तेभ्य परिवृद्धः श्रुतत। ब्रह्म[4] परिवृढं सर्वत इति-शब्दसारूप्यप्रसक्तस्य निर्वचनम्। ब्रह्म ह्येवमृग्यजु[5] सामलक्षणमपरं[6] जगत कारणमपरमन्नं[7] तत्सर्वं परिवृद्धं सर्वतोऽन्यत[8]। अध्वरयुः[9] इत्यध्वर्युशब्दस्यावयवौ विभज्य युशब्दस्य तावन्निर्वचनानि चत्वार्याचष्टे-अध्वर्युर्ह्यध्वरं[10] युनक्ति स्वसाधनैरनुष्ठानेन च, अतो युजेर्युशब्द[11] इति एकम्। अध्वरस्य नेताऽध्वरमनुतिष्ठन्नध्वर्युस्तन्नयति[12], अतो[13] 'या प्रापणे'[14] इत्यस्यान्तर्हितण्यर्थस्य[15] नयतिना समानार्थस्य[16] युशब्द इति द्वितीयम्। अध्वरं कामयत इति वा, अनुष्ठातुं ह्यध्वर्युरध्वरमिच्छति[17], अतोऽयमध्वरशब्दादिच्छायां[18] क्यच्। 'कव्यध्वरपृतनस्यर्चि लोपः'[19] इत्यकारलोप[20]। 'क्याच्छन्दसि'[21] इत्युकार = अध्वर्युरिदं तृतीयम्। अपि वाऽधीयानेऽध्येतरीत्यर्थे। 'तदधीते तद्वेद'[22] इत्यस्मिन्नर्थेऽयं युरुपबन्धः प्रत्यय इदं चतुर्थम्। इदानीमध्वरशब्दस्यार्थमाह-अध्वर इति यज्ञनाम* इति। ध्वरतिर्हिंसाकर्मा+। तत्प्रतिषेध इति निर्वचनम्। अविद्यमानो ध्वरो[23] हिंसा यस्मिन् सोऽध्वर[24]। यज्ञे हि या पशोर्हिंसा साऽनुग्रह एव न हिंसेत्येतत् 'आम्नायवचनादहिंसा प्रतीयेत'[25] इत्यत्र वक्ष्याम[26]।

१-भूयन्ते A. २-सर्वस्यामृक्तो A.
३-यज्ञस्यार्त्तौ ने (तेन C) प्राय० B C
४-परिवृद्ध सवृद्धतत इति B. C.
५-ब्रह्महि कमृ० B. C ६-०क्षण B C
७-०रण पर० B ८-०र्वत इत B C.
९-अध्वरयुरध्वर्युरित्यस्या० B. C.
१०-अध्वर्याध्वर B C.
११-'युजिर् योगे' [धातु० रुधा० उभय० ७, ७]
१२-०ध्वर ह्यनु० B.C. १३-०र्युरन्तर्नय० B C
१४-[धातु० अदा० आत्मने० २, ४०]
१५-०र्नीत० B C.
१६-'नयतिना समानार्थस्य' नास्ति A.
१७-०ष्ठातुरध्व० A
१८-[अष्टा० ३।१।८] ०च्छायामर्थे कूर्च B. C.
१९-[अष्टा० ७।४।३९] '०र्चिलोप' नास्ति B C
२०-'इत्यकारलोप.' नास्ति A
२१-[अष्टा० ३।२।१७०] २२-[अष्टा० ४।२।५८]
* [निघ ३।१७] + [निघ २।१९]
२३-ध्वरोऽस्मिन् A २४-यज्ञा हि ये पशो० B
२५-निरु० १।१६ २६-वत्साम्न. A.

निपात इत्येके, त्व इत्येष[1]। तत्कथमनुदात्तप्रकृति[2]-अनुदात्तस्वभावकं नाम स्यात्। नाम्नां[3] हि सर्वेषामुत्सर्गेणोदात्तत्वं स्मरन्ति-'फिषोऽन्त उदात्तः'[4] भवतीति। दृष्टव्ययं तु भवति, तुशब्द[5]: पक्षव्यावृत्तौ, नैतदेव निपात इति नामैव[6] तत्-दृष्टव्ययत्वात्, व्ययो[7] विविधं गमनमन्यत्र च कारकान्तरे संख्यान्तरे चान्येन च संबद्ध इत्यर्थः। स च नाम्नां[8] धर्मो न निपातानाम्, स चास्य दृष्ट[9]। 'उत त्वं सख्ये स्थिरपीतमाहुः'[10]। इति द्वितीयायाम्। 'उतो त्वस्मै तन्वं वि सस्रे'[11]। इति चतुर्थ्याम्। अथापि प्रथमाबहुवचने। व्ययो दृष्ट इत्यध्याहारः[12]।

"अक्षण्वन्तः"[13] इति। अतो नामैव तन्न[14] निपात। यदुक्तम्-तत्कथमनुदात्तप्रकृति नाम स्याद् इति,तदयुक्तम्, 'नेमत्वसमसिमेत्येतान्यनुदात्तानि'[15]इत्यपवादस्मृतेः। तत्तु निपातत्वेपि तुल्यम्,निपातानां ह्याद्युदात्तत्वमौत्सर्गिकं[16] स्मरन्ति-'निपाता आद्युदात्ताः' इति।

'उत त्व'[17] 'उतो त्वस्मै'[18] इति षष्ठे पादे व्याख्यास्येते।

"अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे॥"[19]

इत्येषा[20] व्याख्यायते। बृहस्पतेरार्षम्। अक्षण्वन्तोऽक्षिमन्तः, कर्णवन्तः सखायश्च

---

१-इत्येतत् B C
२-०दात्त B
३-०म्नो हि A
४-[ फिट्सूत्रम् १।१ ]
५-तु पक्ष० A
६-नाम एतत् B C
७-अस्य वाक्यस्य स्थाने-'व्ययोन्निविध गमनमन्यत्र चान्यत्र ( च C ) कारके संख्याया चान्येन मा ( चा ) न्येन च कारकेण सख्या ( ख्य ) याश्च ( च ) सम्बन्ध इत्यर्थ.' इति पाठो वर्त्तते B. C.
८-न साम्ना B.
९-सुसमृष्टः A.
१०-[ ऋ० १०।७१।५ ]
११-[ ऋ० १०।७१।४ ]
१२-'व्ययो दृष्ट इत्यध्याहार ' नास्ति B. C.
१३-[ ऋ० १०।७१।७ ]
१४-०वैतन्न B ०वेतन C.
१५-'त्वत्त्व समसिमेत्यनुच्चानि' [४।१०] इति फिट्सूत्रम्। अत्र-'०सिमेत्येतान्युच्चानि' इति पाठः A '०सिमेत्यनुच्चानि' इति पाठो युक्त।
१६-व्याद्यु० C.
१७-[ ऋ० १०।७१।५ ]
१८-[ ऋ० १०।७१।४ ]
१९-[ ऋ० १०।७१।७ ]
२०-इत्यादि व्या० A.

सन्त समानं ख्यानं ज्ञानं येषामिति सखाय', तुल्येषु वाक्येषु[1] बाह्येष्विन्द्रियेष्वागमिके च व्याकरणादिज्ञान इत्यर्थ । मनोजवेषु–मनसा ज्ञायन्ते गम्यन्ते[2] ये ते मनोजवा प्रज्ञा-गम्या अर्थास्तेष्वसमा[3] अतुलया बभूवुर्भवन्ति मनुष्या । आदघ्नास इति–छान्दसत्वा-दास्यशब्दस्य स्यशब्दलोप[4], आदघ्नाश्चास्यदघ्ना[5]' कक्षसमीपपरिमाणाश्च[6] ह्रदा स्वल्पोदका[7] इत्यर्थ । उ[8] इति पदपूरण, तादृशास्त्व एक अल्पप्रज्ञा[9] इत्यर्थ' । यादृशा[10] स्नात्वा स्नानार्हा अक्षोभ्योदका[11] इत्यर्थ., तादृशा । उ[12] इति पदपूरण. । त्व एके महाप्रज्ञा[13] इत्यर्थ । ददृश्रे दृश्यन्ते । अक्षि चष्टेर्दर्शनार्थस्य[14] दृश्यते हि[15] तेन, अनक्तेः-'अञ्जू व्यक्तिम्रक्षणगतिषु[16]' इत्यस्य व्यक्त्यर्थस्याक्षी इत्याग्रायणः । तद्धचुज्ज्वलत्वाद् व्यक्ततरमन्येभ्योऽङ्गेभ्य । तथाहि[17] ब्राह्मणेऽपि विज्ञायते, अक्षिणी प्रकृत्येदमुच्यते–'तस्मादेते व्यक्ततरे इव[18]' इति । कर्णः कृन्ततेः 'कृती छेदने[19]' इत्यस्य । स हि निकृत्तद्वारः छिन्नद्वारो गर्भावस्थायामेव विध्वेव शिर. केनापि कृतबिल इत्यर्थः । अर्त्तेर्गत्यर्थस्य 'पाघ्राध्मास्थ[20]' इत्यृच्छादेशविधानादृच्छ-ति गत्यर्थ' । तस्य कर्ण इति आग्रायणः । तथाहि ब्राह्मणे विज्ञायते कर्णौ प्रकृत्येदमाम्नायते । 'ऋच्छन्तीव खे उदगन्ताम्[21]' इति । अत्रर्च्छतेर्गत्यर्थस्य शत्रन्तस्य[22] नपुसके प्रथमाद्वि-वचनस्य 'औङ आपः, नपुंसकाच्च[23]' इति शीभावे कृते नपुंसकस्यात् 'छीनद्योर्नुम्[24]' इति नुमि च कृते-ऋच्छन्तीति रूपम । खे इत्यपि नपुंसके प्रथमाद्विवचनम, गच्छन्तीव[25]

---

१–'वाक्येषु' नास्ति B
२–गच्छन्ते ते A.
३–०ष्वसमर्था A.
४–०दासस्य लोप A
५–यादृश आस्य० B C.
६–त ( क ) क्षसीमपरि० B C.
७–अत्पो० B C
८–उ पाद० A
९–'त्व एक अल्प०' इति नास्ति A
१०–यादृश B
११–अशोभ्यो० C
१२–उ. पाद० A.
१३–महाप्राज्ञा B
१४–०नार्थकस्य B
१५–दृशो हि A दृश्यन्ते B
१६–[अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' धातु० रुधा० परस्मै० ७।१२ ]
१७–तथापि A
१८–नोपलब्धमिद वचनम् ।
१९–[ धातु० तुदा० परस्मै० ६।१४१ ]
२०–[ अष्टा० ७।३।७८ ]
२१–नोपलब्धमिद वचनम् ।
२२–शतृप्रत्ययान्तस्य B C
२३–[अष्टा० ७।१।१८, १९]
२४–[अष्टा० ७।१।८०] २५–०न्तीवैते ख B,C

ख आकाशे कर्णबिललक्षण उद्गंतामूर्ध्वं शरीरस्य शिरसो वा गत उच्चैः स्थित इत्यर्थः। एवमत्र ऋच्छन्तीवेत्यृच्छत्यर्थेन[1] कर्णयोः सम्बन्धदर्शनादृच्छतेः 'नपुंसकाच्च'[2] इति शी-भावे च कर्ण इति विज्ञायते[3]। ये तु-'ऋच्छन्तीव[4] खे उद्गन्ताम्' इत्येतं[5] पाठमाश्रित्यास्येम[6]-मर्थं व्याचक्षते-ऋच्छन्तीवैतौ कर्णौ प्रति खे व्यक्ता सन्त. शब्दा एतावपि[7] चोद्गन्तां प्रत्युद्गच्छत इव ग्रहणाय तान् शब्दानिति[8] तेषामृच्छन्तीत्यर्थं[9] प्रति शब्दानामिह कर्तृत्व-वचनात् कर्णयोस्तेनासम्बन्धत्वादृच्छतेः कर्ण इत्यस्यार्थस्य दर्शनमेवैतज्ज्ञायते[10]। खे शब्दस्य च सप्तम्येकवचनान्तत्वेन प्रगृह्यत्वाभावात् 'खे उद्गन्ताम्' इति प्रकृतिभावेन[11] पाठो नोपपद्यते, ख[12] उद्गन्तामिति स्यात्, अतः[13] पूर्व एव पाठोऽर्थश्च। आस्यमस्यतेः क्षेपणार्थस्य, क्षिप्यते हि[14] तत्रान्नं क्षिपति वा वर्णान् आस्यन्दते स्रवति द्रवीभवति शुष्क-मपि एतदन्नं प्राप्येति वाक्यशेषः। अन्तर्हितण्यर्थो[15] वा स्यन्दिः, आस्यन्दयति द्रावयत्येत-दन्नमित्यर्थ.। शुष्कमप्यन्नमास्यं द्रावयति। दघ्नं परिमाणं-दघ्यतेः[16] स्रवतिकर्मणः, सर्वं हि परिमाणमुत्तरस्मात् परिणामात् स्रुत न्यूनमित्यर्थ.[17]। दस्यतेर्वा स्याद् उपक्षयकर्मणः[18], विदस्ततरं[19] भवति क्षीणतरमित्यर्थ। ह्रदो ह्रादतेः शब्दकर्मणः, स हि बहूदकत्वादभिहन्य-मान शब्द करोति। ह्लादतेर्वा[20] स्याच्छीतीभावकर्मणः[21]। भवति हि सर्वदा शीतोऽसौ बहूदकत्वादादित्यरश्मिभि. सन्तापयितुमशक्यत्वात्।

---

१—गच्छन्ती० B C
२—[ अष्टा० ७।१।१९ ]
३—०यत इति B C.
४—गच्छन्ती० B C
५—०त्येक C
६—वामाश्रितस्य ( त्यासा C स्य ) वचनस्येम० B C
७—व्यक्त सशदनावपि A 'एतावपि' इत्यत्र 'एता-वदपि' पाठ B
८—तान्छब्दा' B C.
९—त्यर्थ B C
१०—नमैवैतद्गायते A
११—अत्र 'वा' इत्यधिक B. C
१२—'ख' नास्ति B C.
१३—अत एव A
१४—'हि' नास्ति A
१५—०न्तर्नीतण्य० B C.
१६—दस्यते B. C
१७—अस्य वाक्यस्य स्थाने-'परिमाणात्तन्न्यूनमित्यर्थ' इत्येव पाठ A.
१८—०क्षयतिक० A.
१९—'वि०' नास्ति A
२०—ह्रादते० C
२१—०त्स्थितिभाव० A,

अथापि समुच्चयार्थे भवति, वक्ष्यमाणस्त्वदित्ययं निपातः। 'पर्याया इव त्वदाश्विनम्'[1] अत्रेवशब्दो वाक्यपूरणोऽनर्थकः[2]। अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग[3] इति। त्वच्छब्दः समुच्चये, त्वच्छब्दोऽपि पर श्रूयमाण उभयोः समुच्चयमाह, देवदत्तो यज्ञदत्तश्च गच्छत इति यथा पर्यायाश्चाश्विनं चेत्यर्थः। भाष्ये विपर्ययेण[4] दर्शितम्—आश्विनं च पर्यायाश्चेति।

एवमुक्ताः कर्मोपसंग्रहार्थीयाः, प्रसंगेन च निपातान्तराणि, यथाप्रतिज्ञातमिदानीं[5] पदपूरणा उच्यन्ते। तेषां सामान्येन तावद्रूपम्—अथ ये प्रवृत्ते[6] परिसमाप्तेऽर्थेऽन्यैः[7] शब्दैः प्रतिपाद्येऽर्थे सर्वस्मिन्[8] प्रतिपादित इत्यर्थः। अमिताक्षरेषु गद्यग्रन्थेषु यजुर्ब्राह्मणेषु[9] च वाक्यपूरणा[10] आगच्छन्ति पदपूरणास्ते मिताक्षरेषु, ऋक्पादेषु[11], येऽप्रवृत्ते[12]ऽर्थे[13] श्रूयन्ते ते गद्यग्रन्थेषु वाक्यपूरणाः पादबन्धेषु[14], पदपूरणा[15] इत्यर्थः। अतस्त[16] उभयत्र अनर्थकाः[17], आनर्थक्यं चात्र न गोरुत[18]काकवाशितादि[19]वत् सम्भवति, तच्छ्रुतौ प्रक्रान्तवाक्यार्थ[20] प्रतिपत्तिविच्छेदाभावात्। यथा ह्यनुकरणादिना प्रयुक्तस्य[21] गोरुतस्य काकवाशितस्य वा वाक्यमध्ये श्रुतौ प्रक्रान्तवाक्यार्थ प्रतिपत्तिविच्छेदो भवति, नैवं वाक्यपूरणस्य पदसूत्रस्य[22] पूरणस्य वा निपातस्य श्रुतौ। अतः कमादीनामन्यतमस्य कस्यचित्स्वार्थ प्रतिपादयतः

---

१–[ कौ० ब्रा० १७।४ ]
२–०पूरणे C
३–अस्य वाक्यस्य स्थाने–'अस्त्यल्पमाम ( 'म' नास्ति C. ) र्थस्य सप्रत्यर्थे प्रत्य ('त्य' नास्ति C) योग इति' इति पाठ. B C.
४–०पि विपर्येण A
५–'यथा०' नास्ति A.
६–येऽपवृत्ते B. येऽपवृत्ते C
७–परिसमाप्त्य० A. 'अर्थे' नास्ति B. C
८–'सर्वस्मिन्' नास्ति A
९–यजु सु ब्रा० A
१०–०रणास्ते A.　११–०ष्वृक्षु A.
१२–इत्यादाव प्र A
१३–०पवृत्ते० B ०पवृत्ते० C
१४–पादवृद्धेषु A.　१५–पाद पू० A.
१६–'त' नास्ति B. C.
१७–०नर्था A.
१८–०रुत कास्त काक० A
१९–'०आदि०' नास्ति A.
२०–'०अर्थ०' इति नास्ति A
२१–प्रयुक्तगोरु० A युक्तस्य गो० B.
२२–अत्र 'सूत्रस्य' इत्यधिक भाति। 'पदपूरणस्य' इत्येव पाठो युक्तः। 'पदसूत्रस्य पूरणस्य' इत्येतावान पाठो नास्ति A

साहचर्ये वर्त्तेत इति प्रतिपत्तव्यम्[1]। यथा पर्याययोरेकस्याधिको[2] वर्ण –ऋषभो वृषभ इति। कथं तर्ह्येतदुपपद्यतेऽनर्थका[3] इति ? उच्यते[4], निष्प्रयोजनत्वात्। विनापि तैरर्थ-[5] प्रतिपत्ते सम्भवात्। निष्प्रयोजनत्वं[6] तेषां प्रदर्शनार्थमाह—कमीमिद्विति। ननु चैत्ये-[7] तस्य पुरस्तादेवोक्तं पदपूरणत्वम्-'अथापि पदपूरण इदमु तदु[8]'इत्यत्र ? सत्यम्, उक्तं तत्र प्रासङ्गिकम्, इह तु पदपूरणमध्येऽसति वचने निपातोदाहरणविषयं[9] विज्ञायेत। तत्तर्ह्य-नर्थकम्[10], विनिग्रहार्थीयत्वस्य च तुल्यकक्ष्यप्रतिपादनार्थत्वादसति[11] हि तस्मिन् वचन इदं पदपूरणत्ववचनं विनिग्रहार्थीयत्वस्यापवादो[12] विज्ञायते[13]। विनिग्रहार्थीयत्वं तु नियतोदा-हरणविषयम्। ते च तुल्यकक्ष्ये कथं विज्ञायेयातामित्येवमर्थ तदपि वचनम्, तयोश्च मन्त्रेषु वाक्यार्थमा[14]लोच्य यस्य[15] यत्र सभवस्तत्र स[16] विवेक्तव्य।

कमादीनामुदाहरणानि–'शिशिरं जीवनाय कम्' इत्यादीनि[17]।

"निष्ट्वक्त्रास[18]श्चिदिन्नरो भूरितोका वृकादिव[19]।
विभ्यस्यन्तो[20] ववाशिरे शिशिरं जीवनाय कम्[21] ॥"

निष्ट्वक्त्रा.[22]–त्वक्त्राणकरणत्वात् त्वक्त्रं वासः, तद्रहिता निष्टक्त्रा[23] दरिद्राः। चि-दिदिति[24] पदपूरणौ, नरो मनुष्या, भूरितोका बह्वपत्या हेमन्ते शीतेनार्त्ता सन्त[25], वृका-

---

१–वक्तव्यम् A.
२–०रेतस्या० B C
३–तदप्येतदप्युच्यतेऽन० B C
४–उच्यन्ते A
५–तैरप्रति० B. C
६–०योजन A
७–अत्र 'च' इत्यस्य स्थाने 'उ' इति पाठो युक्त।
८–'दु' इति त्रुटित B [ निरु० १।५ ]
९–नियतोदा० B C
१०–०क B-
११–'०कक्ष्य०' नास्ति A. तुल्यक्षकक्ष्य० C
१२–०स्यापवा० B.
१३–विज्ञायेत B
१४–वाक्यमा० A
१५–'०लोच्य यस्य यत्र सभवस्तत्र' इत्येतावान् पाठ-स्त्रुटित. B
१६–सभवे A अत्र 'स वक्तव्य.' इति पाठ स्यात्।
१७–इत्यादि A
१८–'निस्त्वक्त्रास० C एष त्रुटितः B
१९–०दिवत् B.
२०–विभ्युष्यन्तो B C
२१–कुत्रत्योऽय पाठ इति न ज्ञायते। [Cf 'मुञ्चामि त्वा हविषा जीवनायकम्' ऋ १०।१६१।१ ]
२२–निस्त्वक्रास B निस्त्वक्त्रास C.
२३–निस्त्वक्त्रा B. C.
२४–चिदिव पादपूरण A
२५–'सन्त.' इति नास्ति A,

दिव बिभ्यन्तो[1] यथा केचिद् वृकाद्बिभ्यत्येवम्, यवाशिरे वाश्यन्ते[2]ऽल्पशीतत्वात्, शिशिरं जीवनायास्माकं न हेमन्त इति, कमिति पदपूरण[3]। शिशिरं शृणातेः[4] शम्नातेर्वा[5] हिंसार्थस्य, हिस्यते हि तत्र दिवोष्णेन हेमन्तजं यवादिसस्यं दावाग्निना[6] तृणौषध्यादि।

"एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने।
चक्रिं विश्वानि चक्रये[7] ॥"

मधुच्छन्दस[8] आर्षम्। आ इत्येष वीत्येतस्य स्थाने, विसृजताध्वर्यवो दत्तेत्यर्थः। ईमिति[9] पदपूरण। एनं[10] सुते सोमे, व्यत्ययेन सप्तम्येषा द्वितीयार्थे, सुतं सोमं मन्दिं तर्पयितारमिन्द्राय मन्दिने तर्पयितव्याय। अथवा सृजतिरत्र प्रक्षेपार्थः[11], प्रक्षिपतैनं सुतेऽस्मि-[12]श्चमसस्थे सोमेऽभ्युन्नयतेत्यर्थ[13]। इन्द्रायेन्द्रार्थं चक्रिं करणशीलं स्वकार्याणाम्, विश्वानि सर्वाणि वृत्रवधादीनि कर्माणि चक्रये[14] साधुकर्त्रे।

"तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव।
य इन्द्रस्य हृदंसनिः[15] ॥"

अमहीयोरार्षम्[16]। तमिद्वर्धन्तु-तं सोमम्, इदिति पदपूरण[17]' वर्धन्तु वर्धयन्तु नोऽस्माकं गिरः स्तुतयः, वत्सं संशिश्वरीरिव-संशिश्वरीरिति च[18] संशिशुशब्द उपपदेऽर्त्तेर्गत्यर्थस्य कर्मण्यणश्छान्दसत्वाद्वृद्ध्यभावः[19]। पूर्वपदस्य च मध्योदात्तत्वं संगत[20] एको

१—बिभ्युष्यन्त B C
२—वास्यन्ते A. वाम्यते B
३—०रणम् B C
४—[शॄ हिंसायाम्, धातु० क्र्या० परस्मै० ९,१८]
५—[ निरु० १, १० ]
६—दवा० B. C.
७—[ ऋ० १।९।२ ]
८—माधुच्छन्दसमार्षम् A.
९—नुमिति B
१०—एव B
११—क्षेपकार्थः A.
१२—०तेऽन्यस्मिन् A
१३—०श्युन्नय० B
१४—चक्रिणे A
१५—[ ऋ० ९।६१।१४ ]
१६—इत्यत आरभ्य 'संशिश्वरीरिव' इत्यन्त पाठस्त्रुटित' A.
१७—०रणम् B.
१८—'च' नास्ति A
१९—०ण्यण छा० C.
२०—सगता A.

बह्वीनां[1] मृतवत्सानां गवां साधारणः शिशुर्वत्सः संशिशुः, तं याः[2] स्नेहार्द्रेण हृदयेन प्रत्येकं पुत्रतया[3] गच्छन्ति ताः संशिश्वर्यः। यथा मृतवत्सा गाव[4] एकस्मिन् वत्से च[5] नीतास्तं प्रत्यात्मिकभिन्नरसक्षीरप्रदानेन वर्धयन्ति[6], तद्वद्भिन्नरूपगुणप्रकाशनेन वर्धयन्त्वित्यर्थः[7]। य इन्द्रस्य हृदंसनि -हृदयस्य सनिता संभक्ता, इन्द्रेण पीयत[8] इत्यर्थः। स्तुतयो गिरो गृणातेः गृणातीत्यर्चतिकर्मा[9]।

"अयमु ते समतसि कपोत इव गर्भधिम्।
वचस्तच्चिन्न ओहसे ॥"[10]

शुनःशेपो यूपे बद्ध[11] इन्द्रमाह[12]-अयम्, उ इति पदपूरणः, ते तव स्वभूतोऽभिषुतः[13] सोमः समतसि-'अत सातत्यगमने'[14]। एकवाक्यता प्रसिद्ध्यर्थं यच्छब्दोऽध्याहार्यः। यं प्रति[15] त्वं सम्यक् सततं गच्छसि, कपोत इव कामार्त्तो गर्भधि गर्भो धीयतेऽस्यामिति[16] गर्भधिः कपोतिका तां प्रतिवचः। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः, यदिदं वचस्तत्, चिदिति पदपूरणः[17]। नोऽस्माकं स्वभूतः[18] ओहसे हरसे[19] वहेरिदं[19] छान्दसेन सम्प्रसारणेनोपधा[20]-गुणेन[21] च रूपं वहस्व[22] प्रापयात्मानं प्रतिश्रृण्वित्यर्थः। अयं[23] सोम एवास्ति, किं तव मया, मुञ्च मामित्यर्थः।

---

१—हतवत्सा० A
२—यात् B.
३—पुत्र गच्छ० A.
४—गा एक० A
५—वत्सवनितास्त B. C.
६—०यति C.
७—०यत्वि० B.
८—पयत B. C.
९—०त्यर्च्यति० B C [ निघ० ३।१४ ]
१०—[ ऋ० १।३०।४ ]
११—यूपे बद्धः शुनःशेप B C.
१२—इदमाह A.
१३—०भिष्टुतः B
१४—[ वातु० भ्वादि० परस्मै० १।३८ ]
१५—प्रसिते A.
१६—गर्भा धीयन्तेऽस्मिन् B
१७—पादपू० A
१८—स्वभूत B. C
१९—अत्र 'हरसे' इति पाठ A नास्ति B. C.
२०—'स०' नास्ति A
२१—०गुण नवरूप A
२२—बहु स्व A.
२३—अथ A.

इवोऽपि दृश्यतेऽनर्थको[1] वाक्यपूरण पदपूरणो वा, 'सुविदुरिव सुविज्ञायेते इव' इत्युदाहरणे कठानां दर्शपूर्णमासप्रकरणे समाम्नायेते[2]–न वै सुविदुरिव मनुष्या यज्ञं[3] तस्मान्न सर्वे[4] ऋध्नुवति यद्दक्षिणां ददाति यज्ञस्य समृद्ध्या इति[5]। तथाधानप्रकरणे[6]–न वै सुविदुरिव मनुष्या नक्षत्रं[7] मीमांसव[8] एव ह्युदितेन वाच्यम्, पुण्याह एवैन[9]-माधत्त[10] इति। तथाधानप्रकरण एव तस्मात्पुरुषश्चाश्वश्च न[11] नक्तं प्रत्यञ्चौ[12] न सुविज्ञायेते इवेतीवशब्दस्य चेह प्रदर्शनार्थमिदमुपादानम्। पादयोपि[13] दृश्यन्ते–'आ घा ता गच्छान्'[14] इत्यादिषु। एवमेत एकनिपातार्था उक्ता, निपातसमुदायार्थाविदानी[15] द्वावुच्येते[16]। यत्तु पुरस्तान्निपातसमुदायार्थं वचनं तत्प्रासङ्गिकमित्युक्तम्।

अथापि नेत्येष प्रतिषेधार्थीय इदित्येतेन संप्रयुज्यते परिभये। संप्रयोगे[17] प्रतीयमानत्वान्निपातसमुदायस्य परिभयमर्थो नैकस्य निपातस्य। 'नेज्जिह्मायन्त्यो नरकं पताम' इत्युदाहरणम्।

"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम[18]॥"

नारदेन किल विप्रलभ्यमाना[19] असुरस्त्रिय आहु[20]—हविर्भिश्चरुपुरोडाशादिभिरेके[21][22] स्वः स्वर्गमित इतो[23] लोकात् सचन्ते, सचतिर्गतिकर्मा[24] गच्छन्ति, सुन्वन्तोऽभिषुण्वन्त एके[25]-

१–'०ऽनर्थको' नास्ति A
२–०मासाम्नायेते A
३–यज्ञ B इत आरभ्य 'सुविदुरिव' इत्यन्त पाठो द्विधा लिखित B
४–सर्वेत्र ध्रुवन्ति A
५–[ काठक० ८।१३ ]
६–यथाधान० A
७–मनुष्यान् क्षत्र A
८–मिसासन्त B C
९–०ह्मैवै० B
१०–[ काठक० ८।३ ]
११–'न' नास्ति B. C नक्त B
१२–इत आरभ्य 'तत्प्रासङ्गिकमित्युक्त' इत्यन्त पाठो नोपलभ्यते A.
१३–'घादयोऽपि' इति पाठोऽत्र युक्त।
१४–[ ऋ० १०।१०।१० निरु० ४।२० ]
१५–०यार्था इदा० B
१६–चावु० C
१७–'सप्रयोगे' नास्ति A
१८–[ ऋ० वे० खिल० १०।१०६।१ ]
१९–नारदेनातिप्रलोभ्यमाना B C.
२०–०यस्तमाहु B. C
२१–'०चरु०' नास्ति A
२२–०रेते B
२३–'इत' इति नास्ति A.
२४–[ निघ० २।१४ ]
२५–येऽन्ये A.

ऽन्ये सवनेषु यज्ञेषु सोमान् शचीरिति[1] वाङ्नाम[2], व्यत्ययेन चैषा द्वितीया तृतीयास्थाने[3] वाचा ऋग्यजु सामलक्षणया जपादिविषयया मदन्तो मदतीत्यर्चितकर्मा[4] स्तुवन्तो देवा-नन्य[5] उत दक्षिणाभिर्गोसहस्रादिदानै, न चैत उपाया अस्माकं संभवन्ति[6]। किन्तु[7] न पतिशुश्रूषैव केवलमुपाय', अतो जिह्मं नाचराम[8] इति वाक्यशेष । कस्मात् ? उच्यते, यस्माज्जिह्मायन्त्यो जिह्ममाचरन्त्यो[9] नरकं पताम बिभेम च नरकपतनात्[10]। एवमत्र[11] नरक-[12]पतनविषयं परिभयत्वन्नेदित्यनेन[13] प्रतिपाद्यते। नरकं न्यरकं[14] नीचैः अर्यते गम्यते यस्मि-स्तन्नरक नरकलोको[15] ह्यधमस्तेन तस्मिन्नीचैर्गम्यते, नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा, न हि नरके रम्यते[16] यस्मिन् स्थाने तदल्पमप्यस्ति, सर्वस्य यातनास्थानत्वात्[17]।

अथापि न चेत्येष[18] निपातसमुदाय[19] इदित्येतेन सम्प्रयुज्यतेऽनुपृष्टे, न चेत् सुरां पिबन्तीति[20]। वृषलेष्वनागच्छत्सु कश्चिद्[21] ब्रवीति—नागच्छन्ति वृषला, न चेत्सुरां पि-बन्तीति, किं सुरां पिबन्तीत्यर्थ'। सुरा सुनोतेः, सा हि[22] सूयते पिष्टादिभि.। एवमुच्चा-वचेष्वर्थेषु निपाता निपतन्ति, ते[23] च कस्मिन्नर्थ इति तद्वाक्यमुपगम्य ईक्षितव्याः।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां

षष्ठस्य तृतीयः पाद.।

---

१—शची शचीति B शचीम् C
२—'वाङ् नाम' नास्ति A तत्स्थाने 'वाचा' इति। [निघ० १।११]
३—०तीयायाः स्था० B C
४—०र्चेत० C स्वन्तिकर्मा A., [निघ० २।१४]
५—०ऽन्ये देवान् A
६—भवन्ति A B
७—तत्र B C
८—न जिह्माचराम B C.
९—जिह्माचर० B. C.
१०—०पात० B C.
११—एवमस्तु B.
१२—०रके पत० B ०रकपात० C
१३—०भय यत्तनेदि० B ०भय यत्तन्नेदि० C.
१४—'न्यरक' नास्ति A.
१५—नरको लोको ह्यवस्तेन B C.
१६—गम्यतेऽस्मिन् B
१७—०स्थितत्वात् A
१८—न चात्येष B
१९—निपातसमाहार B C.
२०—०रामपिपतीति B
२१—कचिद् B.
२२—का हि A.
२३—केचन A.

इतीमानि चत्वारि इत्युक्तोपसंहार उक्तविवक्षया[1]। तत्र नामानि, तत्रेति निर्धारणे[2] सप्तमी, तेषां मध्ये यानि नामानि तानि आख्यातजानीति, आख्यातं तिङन्तपदम्[3], तेना-त्रैकदेशो[4] धातुर्लक्ष्यते, धातुजानीत्यर्थ । अथवाख्यातेन[5] स्वार्थो लक्ष्यते तेनैकदेशभूता[6] क्रिया, तज्जानि तन्निमित्त[7]प्रवृत्तानीत्यर्थ[8]. । एवं शाकटायनो वैयाकरणविशेषो मन्यत इति वाक्यशेषः । अयमेव च[9] नैरुक्तानां समयः सिद्धान्त । न सर्वाणीति गार्ग्यो नैरुक्त-विशेष' । वैयाकरणानां चैके । ये[10] गवादीनर्थवत्[11]प्रातिपदिकमित्येवं साधुत्वेनान्वाचक्षते नौणादिकव्युत्पत्त्या ।

तद्यत्र इति[12] तादिति वाक्योपन्यासे, आख्यातत्व[13]प्रतिनिर्देशो वा, तदाख्यातजत्व[14]-मुच्यत इति । यत्र स्वरसंस्कारौ स्वर उदात्तादिः संस्कारश्च व्याकरणोक्त. प्रकृत्यादि-विभागः समर्थः शक्त. क्रियाया अभिधाने स्वरसंस्काराभ्यां चात्र तदुपेतः[15] शब्दो लक्ष्यते स्वरसंस्कारोपेत., शब्द'[16] क्रियामभिधातुं समर्थ इत्यर्थः । शब्देन प्रतिनिर्देश्यमानत्वात्[17] प्रदेशोऽर्थ[18]स्तस्मिन् भव'[19] प्रादेशिको गुणः, आश्रितत्व[20]सामान्यात् क्रिया गुण इत्युच्यते, तया अन्वितौ स्यातां, संविज्ञातानि—आख्यातजत्वेनैषां नास्ति विप्रतिपत्तिरित्यर्थः । एतदुक्तं भवति—यत्र शब्द. क्रियामभिधातुं शक्नोति, सा च क्रिया तद[21]भिधेयेऽर्थे विद्यते तान्याख्यातजानि । यथा—पाचक[22] पाठक इति । यथा गौरश्व इति भाष्यकारवचनमुक्तेन

---

१—उत्तर वि० B C
२—षष्ठी सप्तमी वा B C [ 'न निर्धारणे' अष्टा. २, २, १० ]
३—लिट्पदम् A ४—तत्रैकदे० A
५—०ख्याते B. C
६—०भूता (ता C.) क्रिया, जाति B C
७—तन्निवृत्ति० A
८—०प्रवृत्तीत्यर्थ' B C.
९—एवमेव वच A.
१०—'ये' नास्ति A. '०ाना चैके, ये' इति पाठ-स्त्रुटितः B
११—भवादनर्थवत् B अत्र कदाचित् 'गवाद्यर्थवत्' इति पाठो भवेत् ।
१२—'तद्यत्रेति' नास्ति A
१३—'०त्व०' नास्ति B C.
१४—तयाख्यात० A
१५—तदुपपत्तेः B तदुपपेतः C
१६—शब्दक्रिया० A.
१७—प्रतिदिश्यमा० B प्रदिश्यमा० C.
१८—'अर्थ' नास्ति A १९—भाव B
२०—'०त्व०' नास्ति A २१—'तद्' नास्ति A
२२—पा (वा C) चक. पाके B C,

प्रकारेण गवाश्वादीनामाख्यातजत्वस्यासम्भवात् प्रविश पिण्डीमित्यादिवदध्याहारेण[1][2] व्याख्येयम, न तु[3] यथा गौरश्वः पुरुषो हस्तीति[4] ।

केचित्तु संविज्ञातशब्दपर्याय इत्येवं मन्यमाना पुरस्तादध्याहारं कुर्वन्ति, तदाख्यातजत्वं यत्र स्वरसंस्कारौ[5] समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम् । न तु[6] यत्र सविज्ञातानि[7] रूढिशब्दा इत्यर्थ । यथा गौरश्वः पुरुषो हस्तीति ।

अथ चेत् इति । निपातानामनेकार्थत्वादथशब्दो यदीत्यस्यार्थे, चेच्छब्दोऽपि[8] हि शब्दस्य, यदि हि सर्वाण्याख्यातजानि नामानि स्युः, यः कश्च[9] व्यत्ययेनात्र पुॅल्लिङ्गत्वम, यत्किंचित् तत्कर्म कुर्यात्सर्वं[10] तत् सत्त्वं द्रव्यं[11] तथाचक्षीरन् यथार्थम्[12] । यः कश्चनाध्वानमश्नुवीत, उष्ट्रादिः अश्वः स वचनीयो वचनार्हं स्यात् । अर्हे चायं कृत्यप्रत्ययः[13] । यत्किंचित् तृन्द्यात्-'तृदि हिंसानादरयोः'[14] हिंस्यात् तृणं तत् कुशकण्टकादि । एवमाख्यातजत्वे[15] नाम्नामेकक्रियानिमित्तोऽनेकस्यैकशब्दत्वप्रसङ्गदोष उक्तः परेण । एकस्यानेकशब्दत्वप्रसंगदोष उच्यते—

अथापि चेत्—अथ पूर्ववद्यद्यर्थे,[16] चेच्छब्दाच्च परो द्रष्टव्यः, चेच्छब्दश्च शब्दस्य-अपि च[17] यदि सर्वाण्याख्यातजानि नामानि स्युः, यावद्भिर्भावैः क्रियाभिः संप्रयुज्येत तद्द्रव्यं, तावद्भ्योऽस्य[18] नामधेयप्रतिलम्भः स्यात् । तत्रैवं सति स्थूणा-दरे शेते व्यवतिष्ठत इति दरशया वाऽऽसचनी च स्यात्, सचतिर्गतिकर्मा,[19] निधीयमानो वंशो[20]

---

१—पिण्डिमि० B C
२—०दिपदाध्या० B. ०दिपदध्या० C.
३—न तथा B.
४—नास्तीति B. C
५—स्वसस्कारौसमस्तौ B
६—ननु A
७—०नि रशब्दा C शब्दा B.
८—'अपि' नास्ति B C
९—कश्चन A.
१०—अत्र 'तत्' इत्यधिक पदम् A
११—द्रष्टव्यं A
१२—यदर्थ A.
१३—कृत्प्र० A
१४—[ धातु० रुधा० उभय० ७।९ ]
१५—०जत्वेन A.
१६—०यदितस्यार्थे B. C. '०यदीत्यस्यार्थे' इति युक्त पाठ ।
१७—'अपि च' नास्ति A
१८—०द्भ्यो नामप्रति० A.
१९—[ निघ० २।१४ ]
२०—वाशो B.

ऽन्यद्वा आसचति-आगच्छत्यस्यामित्यासचनी[1]। आसंजनीति त्वयमपपाठः[2]। संजेर्ल्युट्यु[3]पधाया नकारस्य लोपाभावात्, नकाररहितस्य सजेर्धातोरभावान्न त्वेतद्युक्तमुदाहरणम्। दरशयासचनीशब्दौ हि क्रियायोगशब्दौ न रूढिशब्दौ[4], तौ स्थूणायामन्यत्र[5] च स्त, अतस्तत्रैवं[6] गौरश्वोऽश्वो गौश्च स्यादित्युदाहरणम्[7]।

अथापि—अथशब्दश्चार्थे-अपि च य एषां पुरुषाश्वादीनां न्यायवान्[8]—व्याकरणेन प्रत्यक्षलक्षणविशेषलक्षणेन युक्तो यः स न्यायवानित्युच्यते। कर्मणि निमित्तं[9] नाम कर्मनाम[10], तस्मिन् भवः[11] कार्मनामिकः संस्कारः[12] प्रकृत्यादिविभागेन संस्क्रियमाणत्वात् संस्कारः शब्द. प्रकृत्यादिविभागो वाऽनेन[13] तु पूर्ववत्तदुपेत. शब्दो लक्ष्यते यो न्यायवत्संस्कारोपेत. शब्दो य इति श्रुतेस्तेनाध्याहार्यम्[14][15]। आचक्षीरन्निति वानुषङ्गन्यायादपकृष्टव्यः[16], तेनाचक्षीरन् न्यायवत्संस्कारस्य[17] सर्वस्मिन् तदर्थे[18] प्रयोगार्थत्वात्, यथा चापि प्रतीतार्थानि स्युः प्रत्यायकानि[19] तस्यार्थस्येत्यर्थः। न्यायवता संस्कारेणोपेतानि प्रत्यायकानि[20] तस्यार्थस्य सम्भवन्ति[21], अतस्तथैनान्याचक्षीरन् पुरुषम् आत्मानं पूः शरीरं तस्मिन् परिभोक्तृत्वेन[22] शयानं पुरिशय इत्याचक्षीरन्, अष्टेत्यश्वं तर्दनमिति तृणम्।

अथापि—अपि च[23] निष्पन्नेऽभिव्याहारे[24] शब्दप्रयोगेऽभिगम्य विचारयन्ति[25] कथमयं

१—'०च०' इति त्रुटित B
२—'अयम्' नास्ति A
३—सजे लघूपधालोपाभा० A सजेर्ल्युंग्युवधा० C.
४—'न रूढिशब्दौ' नास्ति B C.
५—स्तोतृणामन्यत्र A
६—०स्तत्रैव A C
७—०दाहर्त्तव्यम् B. C
८—न्यायव्याकरणेन प्रत्यक्षे लवणलक्षणेन A
९—कर्मनिमित्त A
१०—'कर्मनाम' इति नास्ति A.
११—भव A
१२—'सस्कार.' नास्ति B C.
१३—'वा' नास्ति A वातेना B.
१४—स्थिते० A
१५—०स्तेनेत्यध्या० C.
१६—०पक्रष्ट० C. ०यादय द्रष्टव्य. A
१७—न्यायः सस्कार. स्व सर्व० A
१८—तदर्थत्वात् B C.
१९—'प्रत्यायकानि' नास्ति B. ०यकानि स्यु' C
२०—च प्रत्यायकानि च B C
२१—सभवति A
२२—पुरि भोक्तृ० B
२३—'अपि च' नास्ति A
२४—०न्ने गीत्याहारे B
२५—विचारयेति A. निचारयन्ति B.

शब्दोऽत्र प्रयुज्यत इति । तच्चाप्युक्तं[1] विचारस्य प्रयोगनिष्पत्त्यर्थत्वात् तस्य च निष्पन्नत्वात् विचारयितारश्च[2] प्रथनात्पृथिवीमाहुः । तदप्ययुक्तम्, को हि एनामप्रथयिष्यत्, प्रथयन् वा किमाधार आसीत्, सर्वस्य स्थावरजङ्गमस्यैतदाधारत्वात् ।

अथाऽनन्विते[3]ऽर्थेऽप्रादेशिके विकारे[4]–अथ[5]शब्दोऽत्र केवलोप्यपिचेत्यस्यार्थे । अनन्वित इति[6] क्तप्रत्यय[7] कर्त्तरि, अननुगतवत्यर्थे[8] । कमननुगतवति ? सामर्थ्याच्छब्दम्[9], शब्देनाभिधातुमशक्येऽर्थे[10] इत्यर्थः । अप्रादेशिके विकारे–विकार इति क्रियामाह-अप्रादेशिक्यां क्रियायामर्थेऽसम्भवन्त्यामित्यर्थ[11] । पदेभ्यः-पदमत्रा[12]वयवभूतधातूपलक्षणार्थ[13], पदावयवभूतेभ्यो धातुभ्य इत्यर्थ, पदेतरार्धान्-पदस्यावयवभूतप्रकृतित इतरेऽन्येऽर्धावयवाः प्रत्ययास्तान् संचस्कार शाकटायनः । तद्यथा-एतेर्धातो. कारितं च यकारादि चान्त[14]करणम्; कारितमिति, पाचयतीत्यादौ[15] यो णितमाह, यकारादिः[16]–यो दीव्यतीत्यादौ श्यन्, अन्तकरणः प्रत्यय, तेन हि साधुत्वान्वाख्यानवेलायां प्रयोगवेलायां च शब्दस्यान्तः क्रियते । तथाऽस्तेर्धातोः[17] शुद्धं[18] च सकारादि[19] च, शुद्ध सकारोऽन्तकरणः, वृक्षः प्लक्ष इति प्रथमैकवचनम् । सकारादिः पिपासति यियासतीति[20] । तावस्ते[21] संचस्कार । तच्चायुक्तम् । कथम् ? पाचयतीत्यत्र[22] योऽर्थः संप्रेषणा[23]ध्येषणादि, दीव्यतीत्यत्र देवनं प्रति[24]

---

१–तच्चाय युक्त A
२–विचारितारश्च B C ०तारश्च C
३–०नन्वीयतेऽर्थे B. ०वीकेऽर्थे C.
४–विचारे A.
५–अथोत्र A
६–इति उक्त० B. C.
७–०त्यय कर्त्त A.
८–०गतव्यर्थे A.
९–०र्थ्याच्छब्द A
१०–०शक्यार्थ A
११–०भवादित्यर्थः A
१२–पद म आ० A
१३–०यववातू ( रू C ) पलक्षण ('ण' नास्ति C) ब्रह्मणार्थ B C
१४–०राभिश्चान्त० B ०भि चान्त० C.
१५–०यत्यादौ A
१६–०रादिं A
१७–कथमस्तर्वातो. B कथा अस्तेर्वा० C [असू भुवि, धातु० अदा० उभय० २।५६ ]
१८–'शुद्ध च' नास्ति A
१९–सस्काराजीभिश्च B. सकाराजीभि च C
२०–'यियासति' इति नास्ति A
२१–सत्तावस्ते. B C
२२–०पत्यत्र A
२३–सप्रेषणा० A C
२४–'प्रति' नास्ति A

कर्त्तृत्वम्, वृक्षः प्लक्ष इत्यत्रैकत्वम्, पिपासति यियासतीत्यत्र च सनोऽभिधेयत्वेन, एति धातुमस्ति चाननुगतित्वादेतिनास्तिना च नाभिधीयत इत्यर्थ । यस्ताभ्याममभिधीयते- 'इण् गतौ' इति गति, 'अस् भुवि' इति भवनं सोऽप्रादेशिक, पाचयतीत्यादावर्थे नास्तीत्यर्थ । अतो यदेतेर्निवि श्यनं चास्ते प्रथमैकवचनं सनं च संचस्कार शाकटायनस्तदयुक्तम् ।

अथापि-अपि च सत्त्वपूर्वो भाव इत्याहुः । सत्त्वं द्रव्यं तत्पूर्वं यस्मात् स सत्त्वपूर्वो भाव क्रिया द्रव्यसाध्यत्वात् । द्रव्याश्रयत्वाच्च क्रियाया । द्रव्यं पूर्वं पश्चात् क्रियेत्येवमाहुरित्यर्थ. । ततः किम् ? उच्यते-अपरस्माद्भावात् पूर्वस्य सत्त्वस्य प्रदेशोऽभिधानं नोपपद्यते । एतदुक्तं भवति-जातमात्रोऽश्वोऽश्व इत्युच्यते, न च तदानीं तस्याध्वाशनमस्ति, अतो न सर्वाण्याख्यातजानि नामानीति ।

तदेतन्नोपपद्यते, कथम् ?

यथो हि न्वा एतं-'यथा उ हि नु आ' इति पंचैते निपाता. । तेषामेको यदित्यस्यार्थे, अपरस्तावदित्यस्यार्थे, शिष्टा वाक्यपूरणाः । यत्तावदित्यर्थ. । यत्तावदेतं-तद्यत्र स्वरसंस्कारौ समर्थौ इत्यादि । तत्र ब्रूम -सर्वोऽर्थोऽनेकेन कर्मणा युक्त., तत्र यद्यत्कर्म येन येन शब्देनाभिधातुं शक्यते, तस्य तस्य सर्वस्यार्थे विद्यमानत्वात् सर्वं कर्म प्रादेशिकम्, शब्देन च सर्वेण यस्तस्यावयावभूतो धातुस्तस्य यद्वाच्यं कर्म तदाभिधातुं शक्यते । कथम् ? यस्ता-

१-छासनो० A. ०त्युल्लासनो० B ०त्युश्रामनो C.
२-नावीयन्त B नाभिधीयन्त C
३-[ धातु० अदा० परस्मै० २।३६ ]
४-[ धातु० अदा० परस्मै० २।५६ ]
५-०तेर्निर्वश्यन B C अत्र कदाचित् '०तेर्णिचि श्यन' इति पाठ. स्यात् ।
६-सम A
७-'भाव' नास्ति A.
८-'किम्' नास्ति B C.
९-अपत्याहुरस्माद् भावात् पूर्वस्मात् B.
१०-'यथो हि नु वा एतत्' इति मुद्रितपुस्तकेषु पाठो दृश्यते ।
११-शिष्टौ A
१२-०देति A
१३-सर्वार्थो० A
१४-'तत्र' नास्ति A
१५-'येन' नास्ति B C
१६-'तस्य' नास्ति A.
१७-'कर्म' नास्ति A
१८-यस्तस्य शब्दस्यायभूतो B C.

वदविनष्टधातुरूप[1] एव, यथा–ऽश्व इति, तस्य[2] याऽशनक्रियाविषया शक्तिः कल्पिता, तस्यास्त्यागस्य शक्त्यन्तरकल्पनायाश्चान्याय्यत्वात्, अशन प्रत्यायनार्थ एष[3] प्रत्ययस्तु[4] तत्संबन्धार्थस्य जातिविशेषस्यासकृत् प्रयोगाद् रूढिशब्द इत्येव न्याय्यम्। अतस्तेनापि कर्माभिधातुं शक्यते। यत्रापि शब्देऽक्षरमात्रं धातोरस्ति न विनष्टं धातुरूपम्, यथा–लक्ष्मीर्लाभाद्वेत्यत्र[5] लभते, तत्रापि शब्दस्यार्थे सर्वेषामवयवानां शक्तेः कल्प्यमानत्वाल्ल[6] इत्यस्य या[7] लाभविषया शक्तिः कल्पिता तस्यास्त्यागस्य[8] शक्त्यन्तरकल्पनायाश्च पूर्ववद्-न्याय्यत्वात्, ल इत्येतस्य लाभार्थता[9]। प्रत्ययस्य तु[10] तत्संबन्धार्थे रूढिशब्दत्वमित्येतदेव न्याय्यम्। अतस्तेनापि[11] कर्माभिधातुं शक्यते। यत्रापि वर्णमात्रं धातोरस्ति, यथा–गौरिति गकारः, तत्रापि वर्णमात्रस्य कल्पितशक्तित्यागस्य शक्त्यन्तरकल्पनायाश्चान्याय्यत्वाद् गत्यर्थत्वम्, प्रत्ययस्य तु तत्संबन्धार्थे रूढिशब्दत्वमित्येतदेव[12] न्याय्यम्। अपि च गकारमात्रस्य दृश्यत एव गत्यर्थत्वम्[13]-अन्तगः, अत्यन्तगः[14], अध्वगः, गुरुतल्पग इत्यादौ। अतस्तेनापि शक्यत एव कर्माभिधातुम्। एवं सर्वस्य कर्मणः प्रादेशिकत्वाच्छब्देनाभिधातुं शक्यत्वात्[15], तद्यत्र स्वरसंस्कारौ समर्थावित्यादिस्तावद् अनुपालम्भः।

यथो एतत्। 'यथो' इति[16] यदपीत्यस्यार्थे। यथो[17] यदप्येतत्-यः कश्च[18] तत्कर्म कुर्यात् इत्यादि, तत्रापि ब्रूमः–प्रत्ययस्य रूढिशब्दत्वात् पश्यामः समानकर्मणां[19] नामधेयप्रतिलम्भमेकेषां नैकेषाम्। यथा तक्षा इति शिल्प्येवोच्यते, न तक्ष्णुवन्नप्यन्यः[20]। परिव्राजक

---

१–०नष्ट धातुरूपमेव A
२–कस्य पाशनक्रिया क्रियाविधया A.
३–एव B C.
४–'तु' नास्ति A.
५–लक्ष्मी भवार्थ (भार्के C.) द्वत्यत्र लले B C
६–कल्पनामत्त्वात् A अत्र कदाचित् 'कल्पनासत्त्वात्' इति स्यात्।
७–'या' नास्ति A.
८–सुस्या० B.
९–०तस्य या ला० A.
१०–'तु' नास्ति A
११–'०अपिकर्म' नास्ति A
१२–रूढ० B.
१३–गत्यर्थ B C
१४–'अत्यन्तग' नास्ति B C
१५–शक्यते A
१६–'यथो इति' नास्ति A.
१७–'यथो' नास्ति B C
१८–कश्चन A. B.
१९–०कर्माणा B.
२०–०प्यस्य: B.

इत्याश्रमविशेषस्थ एवोच्यते, न परिव्रजन्नप्यन्य[1]। जीवन इति साग्निरङ्गार एवोच्यते, न जीवन्नप्यन्य[2]। भूमिज इति ग्रहविशेष[3] एवोच्यते, न भूम्या जातोऽप्यन्य[4]।

एतेनैवोत्तरो[5]—यावद्भिर्भावैः संप्रयुज्येतेत्यादि[6] प्रत्युक्तः[7]। समानेऽपि व्यशनेन[8] गमनेन च प्रयोगे[9] प्रत्ययस्य रूढ्यर्थत्वात्, गौर्गौरित्येवोच्यते नाश्व इत्यपि[10]। अश्वश्चाश्व इत्येवोच्यते न गौरित्यपि[11]।

यदप्युच्यते[12], यथा चापि प्रतीतार्थानि स्युः इत्यादि। तत्र यत्तावदुक्तम्—य एषां न्यायवान्[13] कार्मनामिकः संस्कारः तेन[14] चाचक्षीरन्[15] इति। तत्तावदुक्तमेवायुक्तम्[16], उणाद्युक्तस्यापि[17] संस्कारस्यान्याय्यत्वात्[18]। यत्तु—यथा चापि प्रतीतार्थानि स्युरित्याद्युक्तम्, तत्रापि[19] ब्रूमः—सन्त्यल्पप्रयोगा इत्यादि। अस्यायमर्थ—प्रत्ययोपात्तरूढ्यर्थसम्बन्धस्य स्वार्थेन[20] विशिष्टरूपस्य सतस्तत्रैव धातोः प्रयोगात्[21] तत्राल्पप्रयोगत्वम्[22], अतोऽल्पप्रयोगत्वाद्रूढ्या चापहृतबुद्धित्वात्[23] सत्यपि धातोः कर्माभिधानसामर्थ्येऽप्रतीतिरेषा[24] भवतो जाता, न तु शब्दस्य कर्माभिधानसामर्थ्याभावात्। यथा कृदन्तेष्वैकपदिकप्रकरणाधी[25]-

---

१—जीवन्नप्य० B

२—इत्यत आरभ्य 'न भूम्या जातोऽप्यन्य' इत्यन्त पाठो नोपलभ्यते B

*—[ "अङ्गारक कुज्जो भौमो लोहिताङ्गो महीसुत" अमर १।३।५५ ]

३—विग्रह वि० A

४—'अप्यन्य' नास्ति A    ५—तेनैवो० A

६—'०ज्यत इत्यादि' इति पाठो युक्त।

७—०दि प्रयुक्त B ०दि प्रत्युक्तम् C

८—व्यशाने A    ९—योगे A

१०—इत्यत आरभ्य '०वोच्यते' इत्यन्त पाठो नोपलभ्यते B C.

११—नौरि० B

१२—'यदप्युच्येत, यथा चापि' इत्यस्य स्थाने 'न नौरित्येव' इत्येव पाठ पुनर्लिखित B.

१३—स्याय्यवान् B C.

१४—वा० A

१५—[ नि० १।१३ ]

१६—तत्राद्यत्तु [ त्त C ] मेवोपयुक्तमित्याद्युक्त० [ उणाद्युक्त० C ] B C

१७—०क्तत्वस्या० A

१८—०स्य न्या० B C

१९—'अपि' नास्ति A

२०—०न्वस्यार्थेन A

२१—प्रत्ययोगात् C

२२—'०त्वम्, अतोल्पप्रयोग०' इति पाटस्त्रुटित B.

२३—०पहृत० A

२४—न प्रतीति० B C

२५—०पदी प्र० B. C

तेषु व्रततिर्दमूना इत्यादिषु। व्रततिः वरणा[1]त्तनति, स तु वल्ल्या प्रसिद्ध। दमनाद्[2] दमूना इत्यग्निरतिथिर्वा। जाठ्य इति जरतेर्वा जायतेर्वा, कल्य प्रत्ययार्थ, जटिलोऽभिधेय। आरूणारः[3] अटन[4]शील। तथा जागरूको दर्विहोमी इत्यन्वर्था। अल्पग्रहणं प्रतीतार्थम्[5]।

यद[6]पि-एतत् निष्पन्नेऽभिव्याहार इत्यादि। तत्रापि ब्रूम -सर्वत्रैव हि निष्पन्नेऽर्थे निष्पत्ति प्रवृत्ति प्रवृत्तेऽभिव्याहारे[7] येन येन योगेनायं प्रवृत्त इति योगपर्येषणा[8] भवति न योगवलेनाभिव्याहार[9] प्रवृत्ति शब्दस्यार्थे प्रवृत्तेर्लोकाधीनत्वात्।

यदपि-प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत किमाधारश्चेति उक्तम् अत्रापि ब्रूम इहैक[10] प्रयोजकस्य प्रथयितुर्व्यापार, अपर प्रयोज्यस्य प्रथितु प्रथनं न[11] तयो[12] प्रथनात्[13] पृथिवीत्युच्यते। किं तर्हि? प्रत्यक्षेण चेयं पृथुः दृश्यते, अप्रथिता चाप्यन्यैः। अथ प्रत्यक्षेण दृश्यमानमस्या पृथुत्वमुपालभ्येत[14]-कस्मादिय पृथुरिति? एवं सति[15] तुल्यत्वान्न केवलं पृथिव्या पृथुत्वमेवोपालभ्यते, किं तर्हि? सर्व एव दृष्टिप्रवादाः दृश्यतेऽ[16]सावि[17]ति दृष्टि कर्मणि क्तिन्, दृष्टस्यार्थस्य प्रवादा उपालभ्यन्ते, अग्नि कस्मादुष्ण, उदकं कस्माद्द्र[18]वमिति, एतच्चायुक्तम्, दृष्टार्थत्वात्।

यदपि एतत-पदेभ्यः पदेतराधान् संचस्कारेति, तत्रापि[19] ब्रूम -योऽनन्वितेऽर्थे संचस्कार स तेन अन्याय्येन गर्ह्यः। सैषा पुरुषस्य शाकटायनस्य गर्हा, न नाम्नामाख्यातजत्वस्य।

---

१—०वारणा० B [निरु० ६।२८]
२—मदनाद्द० B C [निरु० ४।४]
३—आडार A [निघ० ४।५]
४—आटन० B
५—प्रतीताप्रतीताथम् C
६—'यद्' इति नास्ति A
७—०भिव्यवहारे B
८—योगपर्यायेण A 'योगपर्येषणा भवति न' इत्येतावान् पाठो नास्ति C
९—०भिव्यवहार. B.
१०—इहैकस्य B
११—'न' इति नास्ति A
१२—'त०' इति नास्ति B C.
१३—'प्रथनात्' नास्ति A
१४—०लभ्यते A
१५—एव सप्रदानाना तुल्यता न के० A
१६—दृश्यन्ते A
१७—०सापीति B C
१८—०द्रवति A
१९—तदपि B.

अथवा-एवमस्य[1] ग्रन्थस्य योजना-योऽनन्वितेऽर्थे सञ्चस्कार स तेन गर्ह्यः[2], शाकटायनस्तु नानन्वितेऽर्थे सञ्चस्कार, पाचयति दीव्यतीत्यत्रेतेरर्थस्य[3] वृक्ष प्लक्ष[4] पिपासतीत्यत्र चास्तेरर्थस्य विद्यमानत्वात् । कथ विद्यमानत्वम् ? यो ह्यन्यं पाके प्रयुङ्क्ते स पाकं मनसा गच्छति, यश्च[5] दीव्यति स देवनम्, अतोऽत्र तावद्विद्यन एवेतेरर्थ, वृक्ष प्लक्ष इत्यत्रास्तेरनुगमोऽस्ति । उक्तं ह्यस्तिर्भवतिपर, प्रथमपुरुषे[6]ऽप्रयुज्यमानोऽपि गम्यते-अस्तीति । पिपासतीत्यत्रापि[7] य' पातुमिच्छति[8] पानमस्यास्तीत्यभिलषितत्वेनेति[9] विद्यते ऽस्त्यर्थ । एवमन्वित एवार्थे सञ्चस्कार शाकटायन, अतोऽसावगर्ह्य[10], सैषा भवत[11]. पुरुषस्य गर्हा, न गर्ह्य शाकटायन ।

यदप्येतद्-अपरस्माद्भावात्पूर्वस्य[12] प्रदेशो नोपपद्यत इति, अत्रापि ब्रूम -पश्यामः पूर्वोत्पन्नानां सत्त्वानाम् इत्यादि । एतदुक्तं भवति-प्रदेश' कचिद्भूतात्कर्मणो दृश्यते-अग्निष्टोमयाजी भ्रूणहा ब्रह्महेति, कचिद्वर्त्तमानात्-याचको[13] लावक इति, कचिद् भविष्यत -आगामी गमी बिल्वादो देवदत्तो जातो लम्बचूडको माणवको जात इति । गमी[14] आगामीति भविष्यत्येवान्वाख्यायते[15] 'भविष्यति गम्यादयः'[16] इति । बिल्वादो गमी-त्ययमपि[17] भविष्यत्येवान्वाख्यायते, अण् कर्मणि चेति । लम्बचूडक[18] इति बहुव्रीहि । यद्यपि सामान्येनान्वाख्यायते, तथापि येषां चूडाकरणे कुलधर्म , लम्बा चूडा यथा

---

१-एव तस्य B
२-गुह B C
३-'अत्र' इति नास्ति B C दीव्यनी० C
४-'लक्ष' नास्ति A
५-यन्वदी० B
६-०पुरुषो० B C
७-पपा० C 'पिपासतीति' नास्ति A
८-'या' इत्यत्राधिक पाठ A ०तु गच्छति B C
९-०त्यत्र ल० B
१०-अतो सतीव० A ०वगाह्या B
११-तरत A भगत B C
१२-०पुरुषस्य A
१३-पावको भावक A
१४-अत्र 'गामी' इत्येव पाठ A
१५-इत आरभ्य '०न्वाख्यायते' इत्यन्त पाठो द्विधा लिखित B C
१६-[ अष्टा० ३।३।३ ]
१७-गत इत्य० B C वस्तुतस्त्वत्र 'जात इत्यय०' इत्येव पाठो युक्त ।
१८-'लम्बूलक' इति, 'लम्बचूलण्डक' इति च पाठ A

शाण्डिलानाम्, तेषां जातमात्र एव दारको भविष्यत्या लम्बया चूडया लम्बचूडक इति व्यपदिश्यते। अतो गम्यागामी विल्वादो लम्बचूडक इत्यादौ दृष्टत्वादुपपन्नोऽपरस्माद्भावात्पूर्वस्य प्रदेश ।

अपि च पश्वादिषु[1] सर्वत्र पूर्वस्मादेव[2] भावात्प्रदेशो नापरस्मात्। कथम् ? पश्वादिर्ह्यर्थो[3] द्विरूप-आकृतिरूपो व्यक्तिरूपश्च, तत्र यदाऽऽकृतिरूप[4], तस्य पूर्वोत्पन्नासु व्यक्तिषु दृष्टत्वाद्न्नाशनस्य[5] तत्सामान्यस्य प्रदेशनिमित्तत्वात् पूर्वस्मादेव भावात् प्रदेशो नापरस्मात्[6]। तदेतद् भाष्यकार आह-पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद् भावान्नामधेयप्रतिलम्भम्, नामधेय[7] शब्दस्तस्य प्रतिलम्भ प्रवृत्तिस्ताम् एकेषाम्-यत्र भविष्यत्कर्मनिमित्ता शब्दस्य प्रवृत्ती रूढ्यादि वा[8] तेषाम्। नैकेषाम्[9]-यत्रैतद् द्वयमपि नास्ति।

बिल्वं[10] भरणाद्वा भेदनाद्वा इति। प्रसक्तस्य बिल्वशब्दस्य[11] निर्वचनम्, बिल्व हि बिभर्त्ति दुर्भिक्षादौ भक्ष्यमाणम्, भिद्यते च भक्षार्थिभि[12]। एवमेतत्सर्वनाम्नामाख्यातजत्वं प्रतिपादितम्। तत् किमर्थम् ? उच्यते[13]-अर्थान्तरे यो रूढिशब्दस्तस्यार्थान्तरे प्रयोगः। यथा[14]-'उदुत्य जातवेदसम्'[15] इति जातवेदश्शब्दस्य सूर्ये प्रयोग, यथा च-'संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः'[16] इति ब्राह्मणशब्दस्य मण्डूकेषु[17], रूढ्यर्थस्यासंभवात् कर्मनिमित्तो यथा प्रतीयेतेत्येवमर्थम्[18]।

इति स्कन्दस्वामिकृतायां निरुक्तटीकाया[19]

षष्ठस्य चतुर्थ पाद ।

---

१-पश्चादिषु A
२-पूर्वादेव B C
३-पश्चादि ह्य० A
४-द्याकृति० B C
५-०दर्वाशन० B C
६-०रस्मा C
७-०धेय B
८-'वा' नास्ति A
९-'नैकेषाम्' नास्ति B C
१०-बिल्वा B
११-'बिल्वशब्दस्य' इति नास्ति B C
१२-भिक्षार्थिभि A, भक्तिभि B
१३-'उच्यते' इति द्वि लिखितम् C
१४-इत्यत आरभ्य 'सूर्ये प्रयोग' इत्यन्त पाठस्त्रुटित A
१५-[ ऋ० १।५०।१ ]
१६-[ ऋ० ७।१०३।१ ]
१७-मण्डकेषु A
१८-प्रीयेतेत्येवमर्थ B
१९-निरुक्तवृत्तौ B C

अथापीदमन्तरेण इत्यादिना शास्त्रारम्भस्य[1] प्रयोजनानि पञ्चोच्यन्ते। द्वे अस्मिन् पादे[2] त्रीणि परस्मिन्। अथापीति[3]-प्रयोजनसमुच्चयार्थेनापिशब्देन समुच्चयश्रुतौ समुच्चयस्य द्वितीयेन समुच्चीयमानेन[4] विनानुपपत्तेस्तस्य[5] चानिर्देशात् तत्प्रतिपादकवचन[6]-मध्याहार्यम्। इदं शास्त्रमन्तरेण यस्य नाम्नो यदाख्यातजत्वं तस्य तत्प्रयोजनं नावसीयते। अपि चेदमन्तरेण मन्त्रेष्वर्थप्रत्ययोऽर्थावगमो न विद्यत इति[7] अर्थं च अप्रतियतोऽनवगच्छतो योऽयं[8] व्याकरणे स्वरसंस्कारयो[9] उद्देश उपदेश[10] एषोऽपि[11] नात्यन्तं[12] भवतीति वाक्यशेष। स्वरसंस्कारोपदेशस्यार्थविशेषाधीनत्वात्ताभ्यामेव हि स्वरसंस्काराभ्यां युक्त शब्द क्वचिदर्थे साधु क्वचिदसाधु। यथा-अस्व इति निर्धने साधु नाश्वे। तदिदं निरुक्ताख्यं विद्यास्थानं व्याकणस्य कार्त्स्न्यं करोतीति वाक्यशेष। अथवा कार्त्स्न्यं करोतीति[13], तत्करोतीति णिच्, णिजन्तात् क्विप्, कार्त्स्न्यकरमित्यर्थ[14]।

स्वार्थस्य च मन्त्रार्थप्रत्ययस्य च साधकम्। यद्येतन्मन्त्रार्थप्रत्ययार्थं क्रियते, अनर्थकमेव[15] भवतीति कौत्स आचार्यो मन्यत इति वाक्यशेष। कस्मात्? अनर्थका हि मन्त्राः। मन्त्राणां यदानर्थक्य[16] तदेतेनोपेक्षितव्यम्, एतेन नैरुक्तेनोपगम्येक्षितव्यम्। किं साध्वसाध्विति। आनर्थक्यं चात्र मन्त्राणां न प्रत्याय्यार्थाभावाभिप्रायेणोक्तम्, मन्त्रेभ्योऽर्थप्रत्ययस्य प्रत्यक्षत्वादसति च तस्मिन् परासां[17] चोपपत्तीनां तत्रासम्भवात्? किं तर्हि? तत्प्रत्याय्यस्यार्थस्य[18] कर्मासमवायाभिप्रायेणाविद्यमान कर्मसमवाय्यर्थो[19] येषां तेऽनर्थका, कर्मण्युच्चारणमात्रेणोपयुज्यन्ते नार्थप्रत्यायनेनेत्यर्थ। कुत[20]? नियता[21] हि येषां

---

१–०रम्भप्रयो० B C
२–'पादे त्रीणि परस्मिन्' इति त्रुटित A
३–तत्रापीति B C
४–०चयमा० B C
५–विस्तारानु० B
६–०दक वच० B C
७–'इति' नास्ति A
८–'अय' नास्ति A.
९–स्वसंस्कारयोस्तद्देश B
१०–'उपदेश' इति नास्ति B
११-'अपि' नास्ति B C
१२–नात्यक्त A नान्त्यत्व B
१३–'इति नास्ति A
१४–कारस्न्यकार० B
१५–०कत्वमेवेति भव० B ०त्वमेवे भव० C
१६–'यद्' नास्ति A
१७–पारासा B
१८–प्रत्ययस्या० A
१९–०सवर्य्यर्थो C
२०–'कुत' नास्ति A
२१–निघता ह्येषा B C

वाचोयुक्ति पदानां तेषां चानुपूर्व्यं नियतं–अग्निर्मूर्धेत्येव न हि[1] वह्निर्मूर्धेति मूर्धाग्निरिति वा। तदे[2]नदुच्चारणमात्रेणोपयुज्यमानेषु युक्त[3] नार्थप्रत्यायनेन, तद्[4]भावेपि हि[5] वन्हिर्मूर्धा, मूर्धाग्निरित्यर्थ[6]प्रतीतेरविशिष्टत्वात्।

अथापि रूपं[7] मन्त्राणां सामर्थ्यं तेन सम्पन्ना, पद्गिरित्यर्थ. संगता संबद्धा[8] स्वार्थेन, स्वार्थे लब्धविनियोगा[9] इत्यर्थ। ब्राह्मणेनैव तत्रार्थे[10] प्रत्यक्षवचनेन केचिन्मन्त्रा विधीयन्ते[11]– 'उरु प्रथस्व[12] इति प्रथयति। प्रोहाणि[13] इति प्रोहति' इति। एतदुच्चारणमात्रेणोपयुज्य[14]मानेष्वेषु युक्तं नार्थप्रत्यायनेन, रूपादेव सिद्धे वचनवैयर्थ्यप्रसङ्गात्।

अपि चानुपपन्नार्थाः केचिन्मन्त्रा। यथा–'ओषधे त्रायस्वैनम्'[15] इति, न ह्योषधिस्त्रातुं समर्था। तथा–'स्वधिते मैनं[15] हिंसीः' इत्याह हिंसन्[16]। अयं च विपरीतार्थत्वादनुपपन्नार्थ। एतावुच्चारणमात्रेणोपयोक्तु[17] समर्थौ नार्थ[18]प्रत्यायनेन, अर्थस्यानुपपन्नत्वात्।

अपि च विप्रतिषिद्धार्थः[19] केचिन्मन्त्राः। यथा[20]–एक एव रुद्रोऽवतस्थे न द्वितीयः'[21] 'असंख्याता सहस्राणि'[22] इति मन्त्रौ विप्रतिषिद्धार्थौ, एकत्वासंख्यातसहस्रत्वयोर्विप्रतिषिद्धत्वात्।

---

१–'हि' नास्ति A
२–'तदे०' नास्ति B
३–अर्थ B C
४–०यनेऽन्यभावे० B
५–'हि' नास्ति A
६–०र्वाभिरित्यर्थ० B
७–पात्रमन्त्रा० A.
८–सबन्वा B C
९–०योगादित्य० A
१०–तत्रैवार्थे A
११–'वि०' नास्ति B
१२–[शत० ब्रा० १।१।६।८, 'उरु प्रथा इति प्रथयति' कात्या० श्रौ० सू० २।५।२०] वा० स० १।२२, तै० स० १।१।८।१, ६।२।७।३]
१३–[*cf* वा० स० १।१५ प्रोहामि, ताण्ड्यब्राह्म०] 'प्रोहामिति प्रोहति'
१४–इदमायुचा० B C
१५–[*cf* वा स ४।१,५।४२,६।१५, तै० स० १।३।५]
१६–हसत् B C
१७–०पयुक्त A
१८–नानार्थ० B C
१९–०षेद्वार्था B C
२०–अत्र 'तद्यथा' इति लिखित्वाऽन पर '०विप्रतिषिद्धत्वात्' इत्यन्तस्य पाठस्य स्थाने–'एकत्वा सख्यानत्वयोर्विप्रतिषिद्धत्वात्' इत्येतावानेव पाठो लिखित A अवशिष्टस्त्रुटित।
२१–[*cf* तै० स० १।८।६।१]
२२–[वा० स० १६।५४]

"एक एव रुद्रोऽवतस्थे न द्वितीयो रणे विघ्नन् पृतनासु शत्रून् ।
संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ् जनान् संचुकोचान्तकाले[1] ॥"

[2] वामदेवस्यार्षम् । एक एव रुद्रो न द्वितीयोऽस्ति, स चावतस्थेऽवतिष्ठते, रणाय संग्रामार्थमिति रुद्रबहुत्वप्रतिषेध । कथमवतस्थे ? निश्चयेन घ्नन्, पृतनासु स्पर्धनीयेषु सग्रामेषु, किं घ्नन् ? शत्रून् । किञ्च स एक संसृज्य सृष्ट्वा विश्वानि भुवनानि गोप्ता रक्षिता, सृष्ट्वा च सृष्टिकाले, पालयित्वा च स्थितिकाले प्रत्यङ् प्रत्यञ्चयिता यत उत्पन्नानि तत्रैव प्रगमयिता, उपसंहर्त्ता चेत्यर्थ । जनान्, मनुष्यनामैतत्[+], तदप्युपलक्षणार्थम्, मनुष्यप्रभृतीन् संचुकोचयति, अन्तकालेऽन्तं नयतीत्यर्थ । उत्पत्तिस्थितिप्रलयान् त्रीनपि करोतीत्यर्थ । त वयं स्तुम[3] ।

"असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषां सहस्रयोजनेऽव धन्वानि तन्मसि[4] ॥"

१–[ *cf* तै० स० ११८।६।१ ] B C पुस्तकयोस्त्वस्य मन्त्रस्योत्तरार्धोऽन्यथैव लिखित । तथाहि—"स न पातु नयात्ववरे सपत्नान्, शन्नो अस्तु द्विपदे श चतुष्पदे ।" इति । व्याख्यान त्वस्य 'ससृज्ये'त्यस्य चेत्युभयोरपि कृतम । तच्च व्याख्यान सत्यपि क्वचित्साम्येऽस्माभिष्टिप्पण एव कृतम् । येन विवेके सौकर्यं स्यात् ।

२–'वामदेवस्यार्षम्' इति पाठोऽस्मान्मन्त्रात्प्रागेव लिखित A

+–[ निघ० २।१७ ] +–[ निघ० २।९ ]

३–B C पुस्तकयोस्त्वस्य मन्त्रस्येत्थ व्याख्यान वर्त्तते—

वामदेवस्यार्षम् । एक एव रुद्रो न द्वितीयोऽस्ति, स चावतस्थेऽवतिष्ठते, रणाय सग्रामार्थ निघ्नन्, पृतनासु पृतनेति सग्रामनाम, तत्सम्बन्धा या सा (वां C.) भूमेरत्रोपलक्षणार्थं सग्रामभूमिष्वय शत्रुवध करोति, स नोऽस्मान पातु, नयातु नयतु, अवरे स्थाने सपत्नानत्यन्तनिकृष्टान् करोतीत्यर्थ । श सुख च नोऽस्माकमस्तु द्विपद पुत्रादिकाय, चतुष्पदे च गवादिकाय ।

अय चान्य उत्तरोऽर्द्ध –

"स सृष्ट्वा विश्वा भुवनानि गोपा,
प्रत्यङ् जनान् सचुकोचान्तकाले ।"

इद करोति, स सृष्ट्वा विश्वा सर्वाणि भुवनानि भूतजातानि गोपा गोप्ता तेषामेव प्रत्यङ् प्रत्यञ्चयिता च यत उत्पन्नानि तत्रैव प्रतिगमयिता चोपसहर्त्ता चेत्यर्थ । जनान् मनुष्यनामैतत्, तद्व्युपलक्षणार्थम्, मनुष्यप्रभृतीन् सचुकोचयति लय नयति, अन्तकालेऽन्त नयतीत्यर्थ । उत्पत्तिस्थितिप्रलयास्त्रीनपि करोतीत्यर्थ ।

४–[ वा० स० १६।५४ ]

असंख्याता[1] असंख्यातानि[2] सहस्राणि ये रुद्रा अधिभूम्याम्, भूम्या उपरि तेषां सहस्रयोजने[3]-योजनानां सहस्रं सहस्रयोजन, छान्दस पूर्वनिपात[4] योजनसहस्रे स्थिता-[5]नामिति वाक्यशेष । धन्वानि धनूंषि, अवतन्मसि अवतनुम, योजनसहस्रे स्थितानां यो-ऽस्माकमुपरि रोषस्त स्तुत्या यागेन च व्यावर्त्तयन्तो धनूंष्यवततानि-[6]अनारोपितज्यानि कुर्म इत्यर्थ ।

तथा-'अशत्रुरिन्द्र जज्ञिषे'[7] 'शतं सेना अजयत्साकमिन्द्रः'[8] इत्येतावपि मन्त्रौ विप्रतिषिद्धार्थौ, अशत्रुत्वस्य शतसंख्यसेनाजयस्य[9] च विप्रतिषिद्धत्वात् ।

"त्वं सिन्धूँ अवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां
ज्याका अधि धन्वसु[10] ॥"

सुदा पैजवन ऋषि । त्व[11] सिन्धून् स्यन्दयितॄन्[12] माध्यमिकानुदकसंघातानवा-सृजः, अवेत्येष वीत्येतस्य[13] स्थाने, विसृष्टवान्, अधराच -अधोगामिन । अथवा सिन्धवो नद्यस्ता विसृष्टवान्, अधोगामिनीर्यतोऽहन् हतवानसि, अहि मेघम् । अशत्रुश्च त्वं हे इन्द्र ! जज्ञिषे जात । किञ्च विश्व सर्वं पुष्यसि[14] पुष्णासि, वार्यं वारिप्रभवं व्रीह्यादि, यदीदृशो-[15]सि त्वम्[16], तं त्वां परिष्वजामहे[17], आश्रयाम, आश्रितानां च सता[18] त्वत्प्रसादेन नभन्तां

१-'असख्याता' नास्ति A
२-असख्यानि B
३-'०योजने' नास्ति B
४-परनिपात B C
५-'स्थितानाम्'इत्यत आरभ्य 'योजनसहस्रे' इत्यन्त पाठो लेखकप्रमादात्त्रुटित A
६-धनूंषीव ततानि A
७-[ ऋ० १०।१३३।२ ]
८-[ ऋ० १०।१०३।१ ]
९-शत सेनाजयस्य विप्र० A
१०-[ *cf* ऋ० १०।१३३।२ त्व सिन्धूँरवा० ]
११-'त्व' नास्ति A
१२-स्यन्दितॄन् B C
१३-०त्येतत्स्था० B C
१४-च क्षुष्यसि B C.
१५-य ईदृशो० B C
१६-'त्वम्' नास्ति A
१७-०महे B. C.
१८-सन्ता C.

माभूवन्नित्यर्थः । अथवा नभतिर्वधकर्मा[1], नभन्तां विनश्यन्तु । अन्यकेषामस्मत्तोऽन्येषां[2] सर्वलोकस्य कुत्सितानामस्मद्द्विषां[3], ज्याकाः कुत्सिता ज्याः[4], अधिधन्वसु-धनुषामुपरि, विनष्टयुद्धोपकरणा[5] अस्मद्विनाशं प्रत्यसमर्था अस्मद्द्विषो भवन्त्वित्यर्थः ।

"आशुः शिशानो वृषभो न भीमो
घनाघनः क्षोभणश्चर्षणीनाम् ।
सङ्क्रन्दनोऽनिमिष एकवीरः
शतं सेना अजयत्साकमिन्द्रः[6] ॥"

अप्रतिरथस्येन्द्रपुत्रस्यार्षम् । आशुः क्षिप्रं[7] शिशानस्तीक्ष्णीकुर्वन्नायुधं[8] प्रगृहीतायुधो वृषभो न-यथा च नदीकूलेऽन्यत्र वा शृङ्गे निघ्नन्[9] वृषभ, एवं भीमो-भयानको घनाघनो हनाहनो[10] जहि जहीत्येवं शब्दकारी हन्ता चासुरादीनां क्षोभण-संक्षोभयिता, चर्षणीनाम्-प्रत्यनीकावस्थितानामसुरादीनां[11] शत्रुभूतानां संक्रन्दनः संक्रन्दयिता च समाह्वाता[12] च युद्धार्थमित्यर्थः[13] । आहूय चानिमिषो निमेषवर्जितोऽत्यन्तं त्वरित इत्यर्थः । जयं प्रत्येक-वीर[14] एक[15] एव विक्रान्तः शतं सेना[16] बह्वीः शत्रुसेनाः साकमवस्थिता अजयदेक इन्द्रो यस्तं वयं स्तुमः । एवमेते विप्रतिषिद्धार्थास्तदुच्चारणमात्रेणोपयोक्तुं[17] समर्था नार्थप्रत्यायनेन, अर्थस्य[18] विप्रतिषिद्धत्वात् ।

अपि च–अग्नये समिध्यमानायानुवक्तव्यमिति जानन्तमेव[19] होतारमध्वर्युः संप्रेष्यति-

---

१—न भवतीति वध० B. C [निघ० २।१९]
२—०मस्मदन्येषां A.
३—०स्मद्विज B ०स्मद्विशा C
४—अत्र 'ज्याका' इत्यधिक पदम् B C
५—विसृष्ट० A
६—[ऋ० १०।१०३।१]
७—क्षिप्र B C
८—'तीक्ष्णीकुर्वन्नायुध प्रगृहीतायुधो' नास्ति B. C
९—नश्यन् वृषभः B C 'वृषभः' नास्ति A.
१०—'हनाहनो जहि जहीत्येव शब्दकारी' नास्ति B.C.
११—मनुष्याणा शत्रुभू० B C
१२—चाह्वाता च B. C.
१३—'इत्यर्थ' आहूय च' नास्ति A
१४—'जय प्रति' नास्ति B C.
१५—एकश्च क्रान्त. A
१६—इत्यत आरभ्य सर्वस्यास्य वाक्यस्य स्थाने 'सेना अजयत् साक सहेन्द्र' एतावान्पाठो वर्त्तते B C
१७—०र्थास्त उच्चा० B C
१८—अर्थविप्र० B. C.
१९—जात एव B.

'अग्नये समिध्यमानायानुब्रूहि'[1] इति। तदप्युच्चारणमात्रेणैवोपयुज्यमानेऽस्मिन्नर्थवत्, नार्थप्रत्यायनेन।

अपि च-अदितिर्द्युप्रभृति सर्वमित्याह-'अदितिर्द्यौः'[2]-इत्यय मन्त्रः। तच्चायुक्तम्, कथं ह्येकादितिर्द्यौश्चान्तरिक्षं च[3] माता च पिता च पुत्रश्च स्यात्, तदेतदुच्चारणमात्रेणैवोपयुज्यमानेऽस्मिन् युक्तम्, अर्थस्यात्राविवक्षितत्वान्नार्थप्रत्यायनेन। इमं च मन्त्रम् उपरिष्टाद् व्याख्यास्यामः-'अदितिरदीना देवमाता'[4] इत्यत्र।

अपि च-मन्त्रेष्वविस्पष्टार्था केचिच्छब्दा अम्यगादयस्ते कथमर्थप्रत्यायनेनोपयुज्येरन्[5], अतोऽनर्थका हि[6] मन्त्रा।

नैतदेवम्—अर्थवन्तः शब्दसामान्यात्। य एव लोके शब्दास्त एव मन्त्रेषु। ते यथैव लोके पदार्थान् प्रत्याययन्ति तथैव मन्त्रेष्वपि। ते[7] पदार्था आकाङ्क्षितत्वाद्योग्य[8]त्वाच्च[9] सन्निधेश्च संसृज्यमाना यथैव लोके वाक्यार्थं प्रत्याययन्ति तथैव मन्त्रेष्वपि[10]। स वाक्यार्थप्रत्ययो यथैव लोक उपयुज्यते[11] तथैव मन्त्रेष्वपि। कथम् ? मन्त्रा हि ये तावत्[12] प्रैषाः-'अग्नीदग्नीन् विहर'[13] इत्येवमादय[14]। करणाश्च-'बर्हिर्देवसदनं दास्यामि'* इत्येवमादय, तेषामर्थप्रत्यय[15] कर्त्तुः प्रवृत्त्योपयुज्यते। कर्त्ता हि[16] प्रैषात्करणाच्च तदर्थं प्रतीत्य तत्र प्रवर्त्तते। येऽपि[17] क्रियमाणानुवादिनो[18] यूपाञ्जनादिषु-'अञ्जन्ति त्वामध्वरे देवयन्तः'[19] इत्ये-

---

१-[ तै० स० ६।३।७।१, श० ब्रा० १।३।२।३ ]
२-[ ऋ० १।८९।१० ]
३-'च' नास्ति A
४-[ नि० ४।२२ ]
५-अत्र 'उच्चारणमात्रेणोपयुज्येरन्' इत्यपि पाठ C
६-'हि' नास्ति B C.
७-'ते' नास्ति A C
८-०द्योत्य० B
९-'च' नास्ति A.
१०-मन्त्रेऽपि B
११-०के प्रयुज्य० B C    १२-एतावत् A.
१३-[ तै० स० ६।३।१।२ ]
१४-करणाश्च-बर्हिर्देवसदनमादामित्यादय C एष पाठो नास्ति B
* [ "बर्हिर्देवसदन दामि" मैत्रा० स० १, १, २ जैमिनीयन्यायमालाविस्तरे ३ अ० २ पा० अधि० १
१५-'तेषामर्थप्रत्यय' नास्ति B C
१६-कस्मात्तत् A    १७-ये वा B. ये व C
१८-०णानुवादवादिनो B
१९-[ ऋ० ३।८।१ ]

वमादय[1], तेषामप्यर्थप्रत्ययो[2]ऽध्ययनादौ पदार्थे प्रवृत्तस्य[3] कर्त्तुरातत्परिसमाप्ते[4] स्मरणाविच्छे[5]दस्य कर्त्तव्यत्वात् स्मरणेनोपयुज्यते[6]। विच्छिन्नस्मरणो हि कर्त्ता तत्कर्माधिकृतमेव[7] परित्यजेत्।

येऽपि स्तोत्रशस्त्रगतास्तेषामप्यर्थप्रत्ययः स्तुतिरूपनिर्वृत्त्यैवोपयुज्यते। गुणगुणि[8]सम्बन्धप्रतिपादनं हि स्तुतिरित्युच्यते[9], तत्समर्थाक्षरोच्चारणमात्रं[10] न हि श्रवणार्थमभ्यासार्थं वा। स्तुतिसमर्थान्यृगक्षराणि श्लोकाक्षराणि वोच्चारयन्[11]-स्तौतीति व्यपदिश्यते।

येऽप्यनुवचनगता जपा वा, तेषामपि, यद्यप्यनुब्रूयादिति जपेदिति चानुवादिना[12] जपिना चोच्चारणमात्रं चोदितम्, नार्थप्रत्यायनम्, तथापि-'यो ह वा[13] अविदितार्षेय-च्छन्दोदैव[14]ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं[15] वर्च्छति गर्त्तं[16] वा पद्यते' इत्यार्षेयब्राह्मणश्रुते[17]रज्ञायमानार्थस्य च मन्त्रस्य दैवतस्य च[18] वेदितुमशक्यत्वादुपयुज्यते[19]-ऽर्थप्रत्ययः। तदेतदर्थवन्त शब्दसामान्यादिति भाष्यकारेण सर्वमुपक्षिप्तं द्रष्टव्यम्।

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धम्, किं तत्? यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति[20] इति च ब्रुवद् ब्राह्मणमप्यर्थवत्त्वं मन्त्राणां प्रतिपादयति[21]। कर्म क्रियमाणमृगभिवदतीत्यत्र प्रसङ्गेनोदाहरणमुच्यते—

"इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे[22]॥"

---

१—इत्यादय A २—०र्थप्रयोजनादौ A
३—'प्रवृत्तपदौ पदार्थे' इत्यधिक पाठ B C
४—०र्त्तुरेतत्० A
५—०णानितिच्छेस्य B ०णाविति च्छेदस्य C
६—०रणोप० B C ७—०र्माविमक्त० A
८—०गणि० C ९—०त्युद्य० B C
१०—न तत्स० A ११—०रयत् C
१२—चानुपविना B चानुपचिना C अत्र 'चानुब्रविना' इति युक्त पाठ।
१३—वा दरविदि० B C.
१४—अत्र '०दैवत०' इति युक्त पाठ।
१५—वा स्थापय० A
१६—गर्त्ते वा पात्यते A
१७—[आर्षेय ब्रा० १।१० पद्यति]
१८—'च' नास्ति A १९—०त्वाजपयु० B C
२०—[गोपथ ब्रा० II २।६, ४।२, 'यजुर्वा' इति नास्ति ऐत० ब्रा० १।४, १।१३, १।१६, १।१७]
२१—०पादयन्ति A. २२—[ऋ० १०।८५।४२]

सूर्याया[1] आर्षम् । विवाहकाले दम्पती उच्येते । इहैव स्थाने स्तं भवतं मा च[2] वियौष्टं, युजेरिदं[3] रूपं, मा वियोगं प्राप्नुतमित्यर्थः । विश्वं सर्वमायुः परस्परस्य[4] व्यश्नुतं व्याप्नुतं[5] मैकोऽपि[6] युवयोः शीघ्रं[7] मृतेत्यर्थः । क्रीडन्तौ पुत्रैर्नप्तृभिः पुत्रैः[8] पौत्रैश्च मोदमानौ स्वे गृहे ।

यदुक्तं—वाचोयुक्तेर्नियमान्नियतानुपूर्वीकत्वाच्चानर्थका[9] मन्त्रा इति ? तन्न, लोकेऽपि तयोर्दर्शनात् । न हि लोके—'इन्द्राग्नी' शक्राग्नी उच्येते नाप्यग्नीन्द्राविति । किं पुनः कारणं नोच्येते—शक्राग्नी अग्नीन्द्राविति ? अनयोः शब्दयोरसाधुत्वात्[10], असाधोश्च प्रयोगे साधुजन्यो योऽभ्युदयः प्रत्यवायपरिहारो वा तस्यासिद्धेः[11] । यथैव लोक एवं मन्त्रेष्वपि । मन्त्रस्याम्नायवचनसामर्थ्यात्तेन[12] च प्रासङ्गिकं कर्म[13] क्रियमाणं सगुणं[14] भवति नान्येन, सगुणाच्च कर्मण फलसिद्धिः[15] । अतोऽर्थप्रत्यायनेनाप्युपयुज्यमानेषु युक्तो वाचोयुक्तेरानुपूर्व्यस्य च[16] नियमः ।

यदुक्तं—ब्राह्मणेन रूपसम्पन्नानां मन्त्राणां विधानादानर्थक्यप्रसङ्गादनर्थका मन्त्रा इति? तदपि[17] न, अनुवादः सः, यजमानमेवैतत्[18] प्रजया पशुभिः प्रथयतीत्यर्थवादात्[19] ।

यदप्युक्तमनुपपन्नार्थाः केचिन्मन्त्रा इति ? तदपि न, ओषधेर्याऽधिदेवता सा त्रायस्वेत्युच्यते, सा च देवतात्वात् त्राणसमर्था, त्राणं चात्र मार्यमाणस्य[20] पशोर्यत्स्वर्गनयनं तदभिप्राय स्वर्गमेनं[21] नयेत्यर्थः । तथाहि ब्राह्मणम्—"पशुर्वै नीयमानः स मृत्युं प्रापश्यत

१—सूर्या आर्षम् A
२—'च' नास्ति B
३—युञ्जेरि० C. [ युजिर् योगे रुधा० ७।७ ]
४—परस्य तस्य A
५—प्राप्नुत A.
६—'मा' नास्ति A 'एकोऽपि' इत्येव पाठ ।
७—शीघ्र न मृते० A
८— पुत्रै पौत्रैश्च' नास्ति A
९—०पूर्वीजत्वा० A ०पूर्विक० B.
१०—'शब्दयो' नास्ति B. C.
११—त सिद्ध B
१२—०म्नातसामर्थ्या० B C
१३—तेन प्रकाशित कर्म B C. 'कर्म' इति नास्ति B
१४—'सगुण' नास्ति B C.
१५—'सगुणाच्च कर्मण फलसिद्धि' नास्ति A
१६—'च' नास्ति A
१७—तदप्यनुवाद सय० B. तदप्यन अवाद C
१८—'एव' नास्ति A
१९—०वाद B. C
२०—०माणपशो० A
२१—स्वर्गगमनमेवेत्यर्थ B C

स देवान्नान्वकामयतैतुं तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्याम इति" इति। एतेनैव 'स्वधिते मैनं हिंसीः' इति विपरीताचरणाद्यनुपपन्नत्वमुक्तम्, तत्प्रत्युक्तम्। अत एव हि स्वर्गगमनार्थादाम्नायवचनान्मृतस्य हि पशो स्वर्गगमनाद् भूयसोऽनुग्रहस्य निर्वृत्तेर्हिंसाप्येषाऽहिंसैव प्रतीयते।

यदप्युक्तं-विप्रतिषिद्धार्थाः केचिन्मन्त्रा इति? तदपि न, न ह्ययं मन्त्रार्थः-एक एव रुद्रो न द्वितीयोऽस्तीति। किं तर्हि? रणायैक एव रुद्रोऽवतस्थे न द्वितीयः कश्चित्। अन्ये सर्वे नष्टा इत्यर्थः। एवमनेन संग्रामार्थावस्थानगतं रुद्रस्यैकत्वमुच्यते न स्वरूपगतम्। असंख्याता सहस्राणीत्यनेन तु स्वरूपगतमसंख्यातसहस्रत्वम्। अतोऽविप्रतिषेधः। तथा-'अशत्रुरिन्द्र जज्ञिषे' इति। नायमर्थः-अशत्रुरेव त्वं जात इति। किं तर्हि? यतस्त्वमहन्नर्हि मेघं ततः प्रधानशत्रौ तस्मिन् निहतेऽशत्रुर्जातोऽसीति सद्भावेऽप्यन्येषां शत्रूणां निःसारत्वादल्पत्वाद्वाऽशत्रुरित्युच्यते। यथा च लोके-असपत्नोऽयं ब्राह्मणः। अनमित्रो राजा इति। न हि कस्यचित् सपत्ना मित्राणि वा न सन्ति।

"मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः" ॥ इति।

यदप्युक्तं-जानतः संप्रेषणमनर्थकमिति? तदपि न, प्रैषणसमाम्नानसामर्थ्याद्धि प्रैषेण यच्छ्रुतं तस्य कर्माङ्गत्वं न स्वयमुत्पन्नस्य। यथा ह्यभिवादने मधुपर्के चैतस्मिन्नेव

१–०न्नावतामय० B C
२–[ ऐ० ब्रा० २।६ ]
३–'इति' नास्ति A
४–[ य वा स० ४, १।५, ४२।६, १५ ]
५–'इति' नास्ति B. C
६–०मन्येन B C
७–'०गत रुद्रस्यैकत्वमुच्यते न स्वरूप०' इत्येतावान् पाठस्त्रुटित B
८–न प्रतिषिद्ध B. ०षिद्धम् C
९–[ ऋ० १०।१३३।२ ]
१०–'किं तर्हि?' नास्ति B C
११–'मेघ' नास्ति A
१२–'तस्मिन्' नास्ति A
१३–उत्पत्स्यन्ते B. C
१४–[ महाभारते ]
१५–संप्रेक्षण० B. C
१६–प्रैषानाम्नायवचनसा० A प्रेषणसमाम्नान० B.
१७–ह्यति वा० A

काले संकीर्त्तने नामगोत्रयोर्मधुपर्कस्य च यज्ज्ञानं तस्याङ्गत्वं न स्वयमुत्पन्नस्य तद्वत् । अतो जानतोऽपि[1] न सम्प्रेषणमनर्थकम्[2] ।

यदप्युक्तं–अदिति सर्वमित्याहेति, तत्रापि द्युप्रभृतिकर्मैककरत्वादयमदितेर्द्युप्रभृति-[3] व्यपदेश· । यथा लोके–त्वमेव सन्माता[4] त्वमेव पिता त्वमेव च भ्रातेति[5] । यथा च सर्वरसा अनुप्राप्ताः पानीयमिति, सर्वरसजन्या या प्रतीतिस्तस्या[6] अनुप्राप्ते सर्वरसा अनुप्राप्ता इति व्यपदेशस्तद्वत् ।

यदप्युक्त–अविस्पष्टार्था केचिच्छब्दा अम्यगादय इति ? तदपि न । नैष स्थाणो-रपराधो यदित्याद्यनर्थज्ञोपमानेनैतत्प्रतिपादयति[7] । यथायमन्ध· स्थाणुं न पश्यति,[8] न स[9] हश्यस्य स्थाणोरपराध· । किं तर्हि ? द्रष्टु[10] पुरुषस्यान्धत्वात् द्रष्टुमसमर्थत्वात् । एवन्ना-म्यगादीनामर्थस्य ज्ञेयस्यायमपराध , यदेनं[11] भवान्न[12] जानाति, ज्ञातुर्भवतोऽयमपराध , निरुक्त-व्याकरणादिसंस्कारेणा[13]संस्कृतत्वाज्ज्ञातुमसमर्थत्वात् । यथा जनपदे भवा याः क्रिया[14] ओ-दनपाकाद्याः[15] शिल्पक्रिया वा[16] चित्रकर्माद्यास्तासु विद्यातः पुरुषाणां विशेषो भवति[17] । य आगमेन[18] शिक्षत्यभ्यसति च स[19] सुष्ठु जानाति, इतरस्तु मनाक्, नैव वा[20] । एवमत्रापीति वाक्यशेषः । ततश्च येन मन्त्रार्थ· शिक्षितोऽभ्यस्तश्च[21] तस्य न किञ्चिदविस्पष्टार्थम् । किञ्च

१–'अपि' नास्ति A.
२–०मनुक्तम् B C
३–'०कर्मैककरत्वादयमदितेर्द्युप्रभृति०' इति पाठ-स्त्रुटित B
४–'सन्०' नास्ति B C
५–ब्रह्म B C.
६–प्रीतिस्त० A.
७–०नैत प्रति० B
८–यथा च दण्ड स्थाणु न B ०णुन्न C
९–त न द्द० A. न स दृशस्य B C
१०–दृष्टः C
११–यदेव B C
१२–०वान् जाना० A
१३–०दि ज्ञानेनास० B C
१४–'क्रिया' नास्ति A क्रियाया B
१५–०उदकाद्या A. ०पाताद्या C
१६–'वा' नास्ति B चित्रतमाद्या B C
१७–'भवति' नास्ति A
१८–आगमनेन A
१९–'स' नास्ति A स सुषु C.
२०–वाच्यमत्रापी० A 'नैव वा' नास्ति B.
२१–०भ्यस्त च B.

पारोवर्यमागमपरम्परा,[1] तया[2] ये विदन्ति वेदितारस्तेषां मध्ये यो[3] भूयोविद्यः स लोके प्रशस्यो भवति, नेतरो य उत्प्रेक्षया कल्पयत्यल्पविद्यो वा। अत आगमपरम्परया निरुक्तव्याकरणादिविद्याभिर्भूयोविद्यो[4] भूत्वाऽविस्पष्टानामर्थो[5] ज्ञेय इत्यर्थः ।



इति स्कन्दस्वामिकृतायां निरुक्तटीकायां[6]

षष्ठस्य पञ्चमः पादः ।



१—०र्यगाम० B.

२—क्रिया B

३—'यो' . 'स लोके' नास्ति A

४—०योऽपि भू० B '०भूयोविद्येन' इत्युचितम्

५—०ष्टार्थो ( र्था C ) नामार्थो B C

६—निरुक्तवृत्तौ B C

अथापि इत्यादि प्रयोजनानन्तरं[1] वचनम्–अपिच इदमन्तरेण पदविभागः–पदविभागेनात्र ज्ञानं लक्ष्यते, इदं निरवग्रहमिदं सावग्रहमिति, तुल्यायां संहितायामिदं पञ्चम्यन्तमिदं षष्ठ्यन्तमिति च, इदमाकारान्तमिदं[2] चतुर्थ्यन्तमैकारान्तमित्यादिभिर्ये[3] पदविभागस्तस्य ज्ञानं न विद्यते तस्यार्थज्ञानाधीनत्वात्।

"मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम्।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड ॥"[4]

शबरो[5] नाम काक्षीवत ऋषिः। मयोभूर्गावो गव्यूतिं प्रतिष्ठमाना अनयाऽनुमन्यन्ते[6]। मयोभूः सुखस्य भावयिता वातोऽभ्युस्राः अभि शब्दः 'अभिरभागे'[7] इत्येवं कर्मप्रवचनीयः[8] प्रतिशब्देन समानार्थः[9], उस्रा इति गोनाम[10], इमा गा प्रतिवातु वातेन सुखचयमाना[11] इमा ऊर्जस्वतीरोषधीरारिशन्तामास्वादयन्तु। पीवस्वती· पिवो* बलं तद्यासां कर्त्तव्यत्वेनास्ति ताः पीवस्वत्य आपस्ताश्चापो बलकरा इत्यर्थः। जीवधन्याः-धीनोतेः[12] प्रीणनार्थस्येदं रूपम्, जीवानां प्रीणयित्री· पिबन्तु, त्वमस्मा[13] अवसाय[14] अवसम् इति पथ्यदनम् उच्यते, गावः च पथ्यदनं तत्संभवस्य पय आदेः पथ्यद्यमानत्वात् पथ्यदनाय पद्वते पादसंयुक्ताय गोलक्षणाय हे रुद्र! मृड सुखं देहीत्यर्थः, एवमत्रावसायेति न स्यतेरवपूर्वस्य ल्यबन्तस्य रूपमं, धातूपसर्गयोर्ल्यपश्चात्रार्थासंभवात्। पद्वत इत्यनेन[15] सामानाधिकरण्याच्चतुर्थ्यन्तत्वावगतेश्च[16]। किं तर्हि? अवतेर्गत्यर्थस्यासौ[17] नामकरणः, नाम क्रियते येन शब्दस्य स[18]

---

१–०नन्तरवच० B. C अत्र 'प्रयोजनान्तरवचनम्' इति युक्त· पाठः।
२–०माः कारा० C. ३–०त्याभिर्यः C.
४–[ ऋ० १०।१६९।१ ] ५–बभरो B C
६–०मन्त्यते A '०मन्त्यन्ते' इति युक्त पाठ।
७–[ अष्टा० १।४।९१ ] ८–०नीय B C.
९–इत आरभ्य प्रीणनार्थान्त· पाठो भ्रष्ट A.
१०–[निघ०-२।११.]
११–'वातेन च सुखयमाना' इति युक्त· स्यात्।
*–'पीवो' इत्युचितम्।
१२–मूलपुस्तके 'धीमोरेतः' इति पाठ ['धिनोते' इत्युचितम्, प्रीणनार्थो धिविधातु· भ्वादौ १।६२४]
१३–त्वमप्यस्मा B C.
१४–इत्यारभ्य ०सभवात् इत्यन्तः पाठो भ्रमाद् भ्रष्टः प्रतीयते B. C.
१५–'पद्वत इत्यनेन' नास्ति B.
१६–०म्तावग० B ०न्तत्रावग० C.
१७–[भ्वा० प० ६३१] १८–'स' नास्ति A.

नामकरणः प्रत्यय उच्यते । तस्माद् एतत् पदं[1] नावगृह्णन्ति पदकारा, अवग्रहस्यार्थभेद-प्रतिपादनार्थत्वात्, तस्य चेहाभावात् ।

"योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा ।

विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥"[2]

कुत्सस्यार्षम् । योनिं[3] स्थानं वेद्याख्यं ते तव हे इन्द्र ! निषदे-उपवेशनायाकारि कृतमस्माभिः, तमा-तमिति कर्मण आ इति चोपसर्गश्रुते क्रियापदमध्याहार्यम्, तमागत्य निषीदोपविश । स्वानो नार्वा-'स्यमु स्वन ध्वन शब्दे'[4] स्वनति स्वान्यत[5] इति वा स्वानः, आगमनस्येदमुपमानम्[6], अर्वेत्यश्वनाम[*], यथा हेषितशब्दं[7] कुर्वन् शब्यमानो[8] वाश्वः शीघ्रमागच्छेत् तद्वदागत्य च[9] । विमुच्या वयः-अश्वरश्मयोऽत्र वय उच्यन्ते, अश्वं सारथिं च प्रतिगन्तृत्वात्, तान् विमुच्याऽश्वेभ्यः[10], अवसायाश्वान्-अवेत्येष वीत्येतस्य स्थाने, स्यतिर्मुचे[11] स्थाने, अश्वान् विमुच्य योक्त्रेभ्यो रथाद्वा, कीदृशानश्वान्[12] ? दोषावस्तो-रात्रावहनि च[13], वहीयस -अतिशयेन वोढॄन्[14], प्रपित्वे-प्राप्ते यागकाले । एवमत्रागमनकारणं[15] यद्बन्धनं तद्विमोककरणस्य विमुच्या वय[16] इति प्रस्तुतत्वात्, अश्वानिति च कर्मश्रुतेरवसायेति स्यतिः अयम् उपसृष्टः उपसर्गेणावेत्यनेन[17] युक्तो विमोचने वर्त्तत इति गम्यते ।

तस्माद् एतत्पदम् अवगृह्णन्ति धातूपसर्गयोरर्थभेदप्रदर्शनार्थम् ।

---

१-पाद B ००कतपाद C.
२-[ ऋ० १।१०४।१ ]
३-योसि C.
४-[ धातु० भ्वादि० परस्मै० १।८८७, ८७९, ८८१ ]
५-स्वान्यक B
६-०गमस्येद० A
*-[ निघ० १।१४ ]
७-हेषिशब्द B
८-शब्दमानो A
९-'च' नास्ति A
१०-०च्योऽश्वेत्य B.
११-स्यति मु स्थाने B. स्यति मु वे स्थाने C. नास्त्येवेदम् A
१२-'कीदृशानश्वान्' नास्ति A.
१३-'च' नास्ति A
१४-०नुचोक्ष्णन् B ०नुचोढॄन् C.
१५-०मनोपकरण B C
१६-०वयवस्य A
१७-०णानेन A.

"देवाः कपोत इषितो यदिच्छन्,
दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं
शं नो अस्तु द्विपदे शं चतुष्पदे ॥"[1]

नैर्ऋतस्य कपोतस्यार्षम्[2]। कपोतनिलयनो[3] होमोऽनया[4] क्रियते । हे देवा ! कपोत इषित प्रेषितो यदस्मद्विनाशमिच्छन्[5] दूतो निर्ऋत्या निर्ऋतिर्मृत्युदेवता तस्याः सकाशात्स्वभूतो वा, इदमस्मद्गृहमाजगाम, तस्मै-तादर्थ्ये एषा चतुर्थी, निवृत्त्या चात्र तादर्थ्यम्, मशकार्थो धूम इति यथा, तन्निवृत्त्यर्थमर्चाम[6] स्तुम , कृणवाम-कुर्वश्च[7] निष्कृतिं निष्क्रियामाहुतिलक्षणाम्, अत[8] शं नो अस्तु द्विपदे पुत्रादिकाय[9], शं[10] चतुष्पदे गवादिकाय[11] । पञ्चम्यर्थप्रेक्षा[12] वा षष्ठ्यर्थप्रेक्षा वाऽत्रेति वाक्यशेष. । पञ्चम्यर्थ. षष्ठ्यर्थो वाऽत्र[13] विद्यत इत्यर्थ । अत. पञ्चम्यन्तं षष्ठ्यन्तं वैतत्पदम् आःकारान्तम् ।

"अपेहि मनसस्पतेऽप क्राम परश्चर ।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥"[14]

प्रचेतस आर्षम्[15] । दु.स्वप्नदर्शने विनियुक्ता ऋक् । मन इति विज्ञानमुच्यते बुद्ध्यादि तस्य पतिर्मनसस्पतिरात्मा, इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः, उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानोपसंहारस्येशाते, तयोरन्यतर. संबोध्यते हे मनसस्पते

---

१–[ ऋ० १०।१६५।१ ]
२–०स्यार्षम् A इद वाक्यमग्रिमवाक्यानन्तर लिखितम् A.
३–०लयने A
४–०नयाक्रि० A
५–०नाशन्नमि० B. C
६–अर्वाम A
७–कुणपाम B कूर्मश्च B. C.
८–'अत.' नास्ति A.
९–'पुत्रादिकाय' नास्ति B. C.
१०–'श' नास्ति A.
११–'गवादिकाय' नास्ति B C.
१२–पञ्चम्यर्था ( र्थे C ) पेक्षा वा षष्ठ्यर्था ( र्थे C.) पेक्षा वा B C
१३–०ष्ठ्यर्थश्चात्र A. १४–[ ऋ० १०।१६४।१ ]
१५–इत आरभ्य सबोध्यत इत्यन्त. पाठो नास्ति B C.

स्वामिन्[1] ! अपेहि-अस्मत्तोऽपगच्छ[2], मृत्यो[3] ! अपेत्य चापक्राम, अपक्रम्य[4] परश्चर, परश्च[5] सन् निर्ऋत्या आचक्ष्व कथय, बहुधाऽनेकप्रकारं[6] जीवतो मनो जीवतो[7] यादृक् तादृक् तस्य[8] मन., नाद्यापि[9] मरणकाल इति । एवमत्र चतुर्थ्यर्थप्रेक्षा[10], आचक्ष्वेति यस्मा आख्यायते तं क्रियाफलमभिप्रैतीत्येवमेतत्, पत्ये शेत इत्यादिवन्निर्ऋते संप्रदानत्वादेतत्पदं चतुर्थ्यन्तम् ऐकारान्तम् ।

स्यादेतत्, संहितैव कर्मणि प्रयुज्यते, किं तत्र पदविभागज्ञानेनेति ? तन्न[11], पदानामेव हि[12]-'परः सन्निकर्षः संहिता'[13] पर[14] प्रकृष्टो य. सन्निकर्ष संश्लेष. परस्परेण स्वराणां स्वरारूढानां व्यञ्जनानां सा संहितेत्युच्यते न वस्त्वन्तरम्[15] । अतः सा पदप्रकृतिः-पदानि प्रकृतिरस्या. सेयं पदप्रकृतिः[16], पदानि हि पुनः पुन[17]. प्रयोगादन्वयव्यतिरेकाभ्यामवगतार्थानि पदार्थान् प्रतिपत्तुम्[18], तेभ्यश्च वाक्यार्थान्यपि[19] तान्येव प्रयोगमर्हन्ति, न संहिता*, अदृष्टप्रयोगत्वादनवकाशत्वाच्च[20] । 'पदप्रकृतीनि सर्वचरणानां[21] पार्षदानि'[22] स्वस्यां स्वस्यां पर्षदि[23] भवानि पार्षदानि[24] प्रातिशाख्यान्युच्यन्ते । प्रातिशाख्यकारैरपि पदप्रकृतित्वं संहितायाः[25] आश्रितमेवेत्यर्थः । तेऽपि हि पदानि प्रकृतित्वेनोपादाय संहितामन्वाचक्षते ।

---

१—इदं वाक्यं 'अपगच्छ' पदात्पर लिखितम् B C
२—अपगच्छाऽस्मत्तः B C
३—मृत्योरपे० A
४—पुनरपक्रम्य च B C
५—'च' नास्ति A.
६—०कार B
७—जीवत्ता B C.
८—'त' इति त्रुटित B C
९—०द्यापीमरका० B. C
१०—०प्रक्षा C
११—तत्र A.
१२—'हि' नास्ति A
१३—[ अष्टा० १।४।१०९ ]
१४—इत आरभ्य उच्यत इत्यन्त. पाठो नास्ति B C
१५—०न्तर B
*—[ ऋक्प्रातिशाख्य २।१, १०५ ]
१६—'पदप्रकृति.' नास्ति A
१७—'पुन' नास्ति B C
१८—०वक्तुम् B C.
१९—अत्र-'०र्थानिति' इति पाठो युक्त ।
२०—०काशार्थत्वा० B. C
२१—च सर्व० B. C.
२२—०दान C.
२३—परिषदि B C
२४—द्यानि प्रातिशाखा०
२५—०तायामाश्रित० A.

अथापि[1] इति प्रयोजनान्तरकथनम्। अपि याज्ञे कर्मणि दैवतेन बहवः[2] प्रदेशा वचनानि भवन्ति-'आग्नेय्याग्नीध्रमुपतिष्ठते'[3] 'वैष्णव्या हविर्धानम्'[4] इत्यादीनि। न च निरुक्तमन्तरेण दैवतं[5] शक्यं ज्ञातुम्। ते चेद् याज्ञिका ब्रूयुर्लिङ्गज्ञा अत्र स्म इति, लिङ्गं देवताभिधानसमर्थं शब्दः, ततो ज्ञातारोऽत्र मन्त्रगणे वेदे[6] वा वयं दैवतस्येति, देवताया एवाभिधायकान्[7] शब्दान् मन्त्रेण[8] श्रूयमाणा द्रयं[9] दैवतं ज्ञास्यामः, किं नो[10] निरुक्तेनेत्यर्थः। ते प्रतिवक्तव्या -'इन्द्रं न त्वे'[11]त्यादि। अयमस्यार्थः[12]-नैघण्टुकमिदं देवतानाम प्राधान्येनेदमिति कथं विवेकज्ञानमिति[13]। 'इन्द्रं न त्वा'इत्ययमाग्नेयो मन्त्रः, नैन्द्रो वायव्यो वा[14]। 'अग्निरिव मन्यो'[15] इत्ययं मान्यवो[16] नाग्नेय[17] इति नैरुक्तः शक्नोति दैवतं ज्ञातुं नेतरः, 'इन्द्रं न त्वा' इत्यत्रेन्द्रस्य वायोश्च लिङ्गाभावाद् 'अग्निरिव मन्यो' इत्यत्राप्यग्नेः।

अयं मन्त्रो व्याख्यायते—

"त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने।
इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः॥"[18]

भरद्वाजस्यार्षम्। त्वां हि-हिर्[19]यस्मादर्थे, यस्मात्त्वां मन्द्रतममतिशयेन स्तुत्यम्, अर्कशोकैः-अर्को मन्त्रः शोको दीप्तिः, अर्काश्च ते शोकाश्चार्कशोकास्तैः स्वदीप्त्या दीप्तैर्मन्त्रैरित्यर्थः। ववृमहे-संभजामहे[20] नित्यं स्तुम इत्यर्थः। यस्मादिति श्रुतेस्तस्मादित्यध्या-

१-'इति' नास्ति A
२-बहुवः C
३, ४-[ उपतिष्ठो' आग्नेय्याग्नी ] वैष्णव्या हविर्धानम्' मान० श्रौ० २।३।१।१ ]
५-दैवतमथ A ६-पाप B C.
७-०वाधोयकाञ्च्छब्द म० B.
८-मन्त्रे A
९-अत्र "०भिधायकात् शब्दान्मन्त्रे श्रूयमाणाद्द्वय" इत्येव युक्त पाठ।
१०-कि नैरुक्ते० B C
११-[ ऋ० ६।४।७ ]
१२-अयमर्थ' स्यात A.
१३-विवेचक० B C
१४-नैवाय A
१५-[ ऋ० १०।८४।२ ]
१६-इत्ययमान्यव B. C
१७-०ग्नेयमिति B.
१८-[ ऋ० ६।४।७ ]
१९-'हिर्' नास्ति B. C
२०-अत्र भजा० B.

हार्यम् । तस्मान्महि महत्स्तुतिरूपं नोऽस्माकं श्रोषि शृणु[1], हे अग्ने ! कतम उच्यते[2] ? इन्द्रं न त्वा इन्द्रमिव त्वां, शवसा-शव[*] इति बलनाम, अन्तर्हितमत्वर्थ[3] चेह द्रष्टव्यम्, बलवता सारवतेत्यर्थः[4], देवता-देवतां वायुं लुप्तोपममेतत् वायुसदृशं[5] पृणन्ति प्रीणयन्ति[6] राधसा धनेन हविर्लक्षणेन नृतमाः प्रकृष्टनराः[7] ।

"अग्निरिव मन्यो"[8] इति पुरस्तादग्निरिवेन्द्र इवेत्यत्र व्याख्यातः ।

त्विषितो[9] ज्वलितः, त्विषिरित्यप्यस्य[10] दीप्तिनाम भवति इति प्रासङ्गिकं त्विषिशब्दस्य निर्वचनम् ।

अथापि इति प्रयोजनान्तरवचनम्[11] । अपि च 'स्थाणुरयम्' इत्यनयो पूर्वाचार्यस्मृत[12]-श्लोकयोः, 'उत त्वः पश्यन्न'[13] इत्यनयोश्चर्चोर्वेदार्थज्ञानस्य प्रशंसा भवत्य[14]ज्ञाननिन्दा[15] च, प्रशस्तं च कर्त्तव्यमतो ज्ञेया मन्त्रार्था[16], तदर्थमप्यर्थवन्निरुक्तम्[17] ।

'स्थाणुः' इति छिन्नशाखं वृक्षमूलमुच्यते[18], लुप्तोपमश्च अयम्, स्थाणुरिव भारहार इति, हरतिर्धारणार्थो द्रष्टव्यो न देशान्तरप्रापणार्थः[19] । कुतः ? उपमाने स्थाणौ तस्यासम्भवात् । 'किल' इत्यागमप्रदर्शनार्थं । यथा स्थाणु केनचिदारोपितस्य भारस्य धारयितैव[20] केवलं भवति, न तज्ज्ञेनोपकारेण[21] युज्यते, एवमयं[22] वेदभारस्य धारयितैव केवलं

१—श्रुणुव A    २—०मदुच्य० B C.
*—[ निघ० २।९ ]
३—अन्तर्नीत० B. C
४—स्वारस्यवते० A.
५—०शवस B C
६—'प्रीणयन्ति' नास्ति A
७—०ष्टान् रा A
८—[ ऋ० १०।८४।२ ]
९—त्विषिमतो B.
१०—त्विषितस्त्विषिरित्यस्य A.
११—०जनानन्तर० A.
१२—पूर्वापर्य० B. पूर्वाचर्य० C पूर्वाचार्यस्मृति० A
१३—उत त्वा C [ऋ० १०।७१।४]
१४—'भवति' नास्ति A.
१५—अज्ञानस्य च निन्दा B C.
१६—ज्ञेयो मन्त्रार्थ C ज्ञेयो मन्त्र A.
१७—तदप्यर्थवन्निरु० B.
१८—बहुमूल० A
१९—'देशान्तर०' नास्ति A
२०—धारयिता च A
२१—'तज्ज्ञानोप०' 'तज्जेनोप०' इति पाठोऽत्र युक्त ।
२२—इत आरभ्य 'युज्यते' इत्यन्त पाठस्त्रुटितः A.

भवति न तज्ज्ञानोपकारेण युज्यते, कः ? अधीत्य वेदं न विजानाति योऽर्थम् । यः तु अर्थज्ञः स जीवंस्तावत् प्रतिग्रहादि[1] सकलं समग्रं भद्रं कल्याणम् अश्नुते । मृतोऽपि स्वर्गं गच्छति, ज्ञानेन विधूतपाप ।

यद् गृहीतं[*]-ग्रन्थतो वेदस्य[2] विज्ञातं नार्थतः[3], निगदमुच्चारणमात्रम्, तेनैवाध्येत्रा शब्द्यते[4] नास्यार्थज्ञानमस्मिन् भवति, यथाऽग्निरहिते प्रदेशे शुष्कमप्येधो न ज्वलति, एवमग्निस्थानीयेनार्थज्ञानेन रहितेऽस्मिन्नध्येतरि न ज्वलति स्वकार्यं न करोतीत्यर्थः, कर्हिचित् कदाचिदपि । एवमनयोः स्मृतिश्लोकयोः पूर्वस्य पूर्वेणार्धेनाज्ञानस्य निन्दा, परेण ज्ञानप्रशंसा, उत्तरेण तु श्लोकेन समस्तेनाज्ञानस्य[5] निन्दा । स्थाणुस्तिष्ठतेः । स हि तिष्ठत्येव न चलति । अर्थोऽर्तेः[6] गत्यर्थस्य । यस्तावच्छब्दस्यार्थः स तस्माद्[7] गम्यते, यो हिरण्यादिः[8] सोऽप्यनादिना व्यवहारेणान्यस्मात्पुरुषादन्यं गच्छति । अरणस्थो वा । अरणं गमनं शब्दस्य तावदुच्चरितस्य[9] तिरोधानं[10] तस्मिन्नर्थस्तिष्ठति, न शब्देन सह तिरोधीयते, इतरत्रापि गमनमरणं[11] स्वामिनस्तस्मिन् हिरण्यादिरर्थस्तिष्ठति, न स्वामिना सह गच्छतीति[12] ।

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥"[13]

बृहस्पतेरार्षम् । परा च ऋक्[14] । उत त्वः[15]-उतशब्दोऽप्यर्थे, पश्यन्नित्यस्माच्च परो[16]

---

१—०गृहादि A.
*—[ *cf.* महा० १।१।१ ]
२—पदस्य B
३—नार्थमत B. C
४—शब्द्यन्ते A
५—'समस्तेन' नास्ति A
६—०ऽक्तेः० B C.
७—तस्यात् C
८—०ण्याभि B. C.
९—०दुच्यते अस्य B
१०—निरोधन B. C
११—गमन मरणस्वामिनि A.
१२—'इति' नास्ति B C
१३—[ ऋ० १०।७१।४ ]
१४—परार्ष ऋचा A
१५—'उत त्व' नास्ति A.
१६—'परो' नास्ति A.

द्रष्टव्यः। पश्यन्नपि पर्यालोचयन्नपि मनसेत्यर्थ.। त्व एको[1] न ददर्श, दर्शनफलाभावान्नैव पश्यति[2] वाचम्; उत त्व एकः[3] शृण्वन्नपि च[4] श्रवणफलाभावान्नैव शृणोत्येनाम्; योऽस्या[5] न वेदार्थं तमेवमाह। उतो त्वस्मै[6]-उतो इति तुशब्दस्यार्थे[7], एकस्मै त्वर्थज्ञाय तन्वं शरीरमात्मीयं[8] शरीरं वाक् सर्वप्रकारं विसस्रे-सर्त्तेर्गत्यर्थस्यान्तर्हितण्यर्थस्येदं[9] रूपम्, विविधं रूपं[10] गमयति विवृणुते प्रकाशयतीत्यर्थ.। ज्ञानं प्रकाशनमर्थस्याहानया वाचा[11] अनेन वचनेन[12] 'उपमोत्तमया' उत्तमसमीपस्थेन[13] वाचा वचनेन वाक्येनेत्यर्थः[14]। जायेव पत्य उशती सुवासाः-यथा भार्या भर्त्रे[15] कामयमाना सुवासा[16] ऋतुकालेषु संभोगार्थं स्वमात्मानं[17] विवृणुते तद्वत्। एवमियम् अर्थज्ञप्रशंसा।

तस्यैवार्थस्योत्तरा ऋक् भूयसे निर्वचनाय--

"उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्॥"[18]

उत त्वमपि चैकं पीतार्थो यस्तं[19] सख्ये, केन सह? पूर्वस्यामृचि वाचः प्रकृतत्वाद्[20] वाचा, स्थिरपीतं-यो यत्पिबति स तत्प्राप्नोत्यत पानस्य प्राप्तेश्च संबन्धात् पानेनात्र[21] प्राप्तिर्लक्ष्यते स्थिरप्राप्तिमाहु, के? ऋषयो ब्राह्मणा विद्वांस', योऽर्थज्ञ. स वाचं निराह, ततश्च यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति इति[22] ताद्भाव्यापत्तेर्वाचा[23]

१–त्वमेको B.
२–इत आरभ्य 'नैव' इत्यन्त पाठो भ्रष्ट। B
३–'एक' नास्ति A
४–'च' नास्ति C
५–०ऽस्या B C
६–'उतो त्वस्मै' नास्ति A
७–'तु' नास्ति B C.
८–०मात्ममय वाक् B ०मात्मय वाक् C.
९–०न्तर्नीत० B C.
१०–'विविध रूप' त्रुटितः B C.
११–'वाचा' नास्ति B C.
१२–'वचनेन' नास्ति B C
१३–'उत्तमसमीपस्थेन' नास्ति A
१४–वाच्येने० A
१५–तत्र कामयते A
१६–'सुवासा ऋतुकालेषु' नास्ति A
१७–समात्मा० C.
१८–[ऋ० १०।७१।५]
१९–पीतार्थे B ०र्थो यस्मिन्सख्ये A.
२०–०कृतित्वा० A
२१–पान चात्र A.
२२–[निरु० १३।१३]
२३–०द्भाव्याः, एते वा०' A.

सहास्य सख्यं स्थिरमित्येवमाहुरित्यर्थः। रममाणमिति त्वर्थप्राप्तार्थवचनं भाष्ये, यो हि वाचस्ताद्भाव्यमापन्नो[1] रमत एवासौ। अथवा सख्यमित्यत्र[2] रमणीये स्थाने स्वर्गाख्ये गतस्य दैवतैः सह यद्[3] गृह्यते तस्मिन् स्थिरप्राप्तिमाहु., यो विज्ञातार्थस्तम्[4]। अथवा विदुषां संसदि या सत्कथा साऽत्र सखिकर्मत्वात्[5] सख्यमित्युच्यते सा च वाचा क्रियते, अतो वाक्संबन्धाद् भाष्ये वाक्सख्यमित्युच्यते। स्थिरपीतमिति[6] पिबति[7] ज्ञानार्थे, लोकेऽपि[8] यो यत्र ज्ञातार्थो भवति स उच्यते पीतार्थोऽयमत्रेति, आहुरित्यादिः प्रशंसार्थः[9], अस्मिन्नगरे देवदत्त ब्राह्मणमाहुरिति यथा तद्वत्, विद्वत्सु[10] कथायां य. स्थिरज्ञान आक्षेपप्रतिसमाधानसमर्थस्तमेकं[11] प्रशंसतीत्यर्थः। अथवा देवसंबद्धं[12] यत्सखिकर्म यज्ञार्थं[13] रमणीये स्थाने वेद्याख्ये तदत्र सख्यमित्युच्यते, तस्मिन्[14] स्थिरज्ञान आपत्स्वपि प्रायश्चित्तनिमित्तभूतासु न मुह्यति, नित्यनैमित्तिककर्मविधिज्ञ इत्यर्थः, तमेकं प्रशंसन्ति। नैनं हिन्वन्त्यपि[15] 'हि गतौ' शुद्धोप्यत्रानुपूर्व्यस्यार्थे[16]। अपिशब्दश्चार्थे[17], न चैनमनुगच्छन्ति वाजिनेषु वागि[18]नेषु वागिना ईश्वरी येषां, वाचो य आयत्तार्था वाचा ये ज्ञेया इत्यर्थ., ते वाजिनस्तेषु[19]। एव[20]-

---

१—०पन्नमरम० B.
२—सख्यमत्र B C.
३—यत्तद् गृ० B. C
४—विज्ञानार्थ० A
५—सखीकम० B C.
६—'इति' नास्ति A.
७—' ०बतिर्ज्ञाना० ' इति युक्तः पाठ.। ज्ञानार्थ B
८—'यो' नास्ति A.
९—प्रशसादि A.
१०—विद्वत्सकथा० B. C.
११—'तमेक प्रशसन्तीत्यर्थ' नास्ति A
१२—०सबन्ध B C
१३—यत् ज्ञा A
१४—'तस्मिन्' नास्ति B. C.
१५—०न्त्यपी B C.
१६—०पूर्वस्वार्थे A
१७—अपिश्चार्थे A
१८—वाक् इन ईश्वर (री C) एषा वाचो (पो C) B C
१९—'वाजिना.' इत्येव पाठ 'तेषु' नास्ति A.
२०—A. पुस्तकेऽत्र भूयान् पाठो दुर्गवृत्तेस्तन्नाम्नैवोद्धृतो वर्त्तते, तथाहि—
"दुर्गवृत्तौ—'किञ्च नैन हिन्वन्त्यपि वाजिनेषु एन वागर्थज्ञ न हिन्वन्ति नानुगन्तु शक्नुवन्ति। केषु ? वाजिनेषु वाग्ज्ञेयेष्वर्थेषु बलवत्स्वपि दुर्ज्ञेयेषु दु खवद्यघटनीयेषु (दुरव घटनीयेषु मु० पा०) समुद्रपिहितरत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्त्तव्येषु। स हि तान् व्याकर्त्तुं शक्नोति, नेतरे मन्दबुद्धयो बहवोऽपि

मियं ज्ञानप्रशंसा, परा त्वज्ञाननिन्दा, अधेन्वा[1] धेनुत्ववर्जितया कामानामदोग्ध्र्या[2] देव-मनुष्यस्थानेषु वाचा चरति[3] मायया वाक्प्रतिरूपया एषो[4]ऽविज्ञातार्थो यो[5] वाचं शुश्रु-वानफलामपुष्पाम्[6], अर्थो वाचः पुष्पफलम्, याज्ञदैवते पुष्पफले[7] दैवताध्यात्मे वा, याज्ञ-मिति[8] यज्ञज्ञानमुच्यते यज्ञभवत्वात्[9], दैवतं देवताज्ञानम्, आध्यात्ममध्यात्मज्ञानम्[10], तेषां पूर्वपश्चाज्जन्मसामान्याद्धेतुहेतुमद्भावसामान्याच्च याज्ञदैवते पुष्पफले उच्येते दैवताध्यात्मे वा[11], यथा हि पूर्वं पुष्पं जायते[12] पश्चात्फलम्, एवं पूर्वं यज्ञज्ञानं जायते[13] पश्चाद्देवताज्ञानम्, तच्च[14] पूर्वं पश्चादध्यात्मज्ञानम्। यथा वा पुष्पफले हेतुहेतुमद्भूते, एवं याज्ञदैवते दैवताध्यात्मे वा, अतस्तेऽत्र पुष्पफले उच्येते। तद्वर्जितां यो वाचमर्थवर्जितां ग्रन्थमात्रेणैवोपाध्यायाच्छ्रुतवा-नित्यर्थ। अफलाऽस्मा[15] अपुष्पा वाग्भवतीति वा किञ्चित्पुष्पफलेति वा, अध्ययन-मात्राद[16]प्यवश्यकर्त्तव्यत्वादध्ययनस्य कियतोऽपि फलस्यावश्यंभावात्, नासौ[17] परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्राय।

एवमुक्तप्रयोजनस्य निरुक्तस्य परेणागम[18] कथ्यते। साक्षात्कृतधर्माण[19] ऋषयो बभुवुः। धर्मस्यातीन्द्रियत्वात् साक्षात्करणस्यासम्भवात् धर्मशब्देनात्र तदर्थं[20] मन्त्र-

---

समागता शक्नुवन्ति तानर्थान् व्याकर्त्तुम्, यान्सौ (यानसौ मु० पा०) व्याकरोति, अत उक्त (अत एतदुक्त मु० पा०) नैन हिन्व-न्त्यादि दुर्ग'। (अत्र 'हिन्वन्त्यपीति दुर्ग' इति स्यात्)"।

१—अधन्वा B
२—०दोग्ध्या C.
३—चरन्ति B C
४—'अविज्ञातार्थं' नास्ति B C.
५—'यो' नास्ति A.
६—अत्र 'ना' इत्यधिक B.
७—'पुष्पफले' नास्ति B. C
८—'०मिति यज्ञ०' इति त्रुटितः A.
९—'यज्ञभवत्वात्' नास्ति A.
१०—अध्यात्म० B C
११—०ध्यात्मना B
१२—'जायते' नास्ति A
१३—'जायते' नास्ति A
१४—तद्वत् B तद्वात् C
१५—अथ फला० B.
१६—'अपि' नास्ति B C
१७—नासावित्यादिवाक्यं नास्ति B C.
१८—निरुक्तेनाग० A. ०णावगमात् B C
१९—०कर्मणि B ०कर्माण C.
२०—'तदर्थं' नास्ति A.

ब्राह्मणमुच्यते, तत्साक्षात्कृतो धर्मो यैस्ते साक्षात्कृतधर्माण[1] ऋषय । कथं पुनस्तै[2] साक्षात्कृतम् ? उच्यते, स्मृतिकारैरैतिहासिकैश्चाभ्युपगतत्वाच्छ्रुत्या चाविरोधादन्तराल[3]प्रलय पुन सृष्टिश्चास्ति । तत्र सृष्ट्यादौ[4] य[5] ऋषयस्तेऽतीतसृष्टावधीतं सुप्तप्रतिबुद्धन्यायेन मन्त्रब्राह्मणं स्मरन्ति । कश्चित्किञ्चित् यो यत्स्मरति तत्तेन दृष्ट तेन साक्षात्कृतं तेन प्रोक्तं तस्यार्षमिति चोच्यते । यस्य यावदार्ष तेन तावदेव साक्षात्कृतम, अन्यत्तु तेनापि यत्साक्षान्न कृतं तदुपदेशेनैवाधिगतम ।

न च जन्मान्तरानुभूतं नियमेन न[6] स्मर्यते, दृश्यन्ते ह्यद्यत्वेऽपि जातिस्मरा किञ्चित्स्मरन्त । ते चर्षयो यद्यपि प्रतिसृष्ट्यन्येऽन्य[7] उत्पद्यन्ते, तथाप्यतीतसृष्टिकृतपुण्यविशेषवशात् तत्कर्माणस्तन्नामानश्चोत्पद्यन्ते[8] । तेनैकस्यां सृष्टौ विश्वामित्रनाम्ना यत् स्मृतं सृष्ट्यन्तरेऽपि विश्वामित्रनामैव तत्[9] स्मरति । अतो नित्यत्वेपि वेदस्य[10] नार्षव्यपदेशस्य नापि[11] साक्षात्करणस्य[12] कश्चिद्विरोध, एतदभिप्रेत्यैतदुच्यते—साक्षात्कृतधर्माण ऋषयो बभूवुः इति । तेऽवरेभ्यो[13]ऽवरकालीनेभ्य शक्तिहीनेभ्योऽतीतसृष्टिकृतपुण्यविशेषाभावात्, शक्तिभारै[14] असाक्षात्कृतधर्मभ्य उपदेशेन शिष्योपाध्यायिकया वृत्त्या[15] मन्त्रान् ग्रन्थतोऽर्थतश्च[16] संप्रादुः । तेषु हि[17] पूर्वसृष्टावधीतेषु तेषामुपदेशमात्रेणैव स्मृतिर्बभूव, यथेदानी छन्दो नष्टं गणयत कस्यचित् । मन्त्रग्रहणं चात्र ब्राह्मणाना प्रदर्शनार्थम, मन्त्रान् ब्राह्मणानीति[18] संप्रादु । उपदेशाय ग्लायन्तोऽवरे, तेप्यवरतमेभ्य[19] उपदेशायोपदशार्थं[20] ग्ला-

---

१—०कर्माण C.    २—०नस्तत्सा० B C
३—'०राल०' इति नास्ति C
४—दृष्ट्या य B C.
५—'य' इति नास्ति A.
६—'न' नास्ति B C
७—'०ऽन्य' इति नास्ति A
८—०ण्यवशात्कर्मणस्त० A  ०णस्तन्मान० B.
९—तत B    १०—देवस्य B
११—न हि B
१२—०रणविरोव B.
१३—०रेत्य B 'अवरकालीनेभ्य शक्तिहीनेभ्य' नास्ति B C
१४—शक्तिहारेर० C एतद् B पुस्तके नास्त्येव । वस्तुतस्त्वत्र 'शक्त्यभावेऽसाक्षात्कृत०' इत्यादि पाठो युक्त ।
१५—शिष्योपाध्यायिकया वृत्त्या' नास्ति B C.
१६—'ग्रन्थतोऽर्थतश्च' नास्ति B C
१७—'हि' नास्ति A    १८—०णानिति प्रादु B
१९—तेप्यवरेऽवतरेभ्य B C
२०—'उपदेशाय नास्ति B C.

यन्तो 'ग्लै म्लै हर्षक्षये'[1] उपदेशमात्रेण[2] ग्रहीतुमशक्नुवन्तस्तदनुकम्पया क्षीयमाणहर्षास्तानशुकम्पमाना इत्यर्थः । बिल्मग्रहणाय,[3] बिल्मं[4] उपायः, तेन ग्रन्थस्य चार्थस्य[5] च ग्रहणार्थम्, ग्रन्थस्य ग्रहणोपायोऽष्टमधकेन दशमधकेन[6] वा, ग्रहणमध्ययनमर्थस्योपाध्याया[7]त्पुनः पुनः श्रवणम् । वेदाङ्गानि[8] च इमं ग्रन्थं समाम्नासिषुः, वेदं च वेदाङ्गानि च । यद्यस्य[9] साक्षात्कृतधर्मण आर्षं तत्[10] तस्मादुपश्रुत्य कृत्स्नं वेदं ग्रन्थग्रहणार्थं[11] समाम्नात[12]वन्तः, अर्थग्रहणार्थं वेदाङ्गानीत्यत[13] एवोपश्रुत्य स्वयं च[14] कल्पयित्वा निरुक्तं च वेदाङ्गम्[15] । तदेवमागमिकस्येदमागमकथनम्[16] ।

ये तु सृष्टिप्रलयौ नेच्छन्ति, त एतं[17] ग्रन्थमेवं व्याचक्षते—साक्षाद्धर्मवचनोपदेश[18]निरपेक्षं कृतः प्रतिपन्नो धर्मो[19] यैस्ते साक्षात्कृतधर्माण[20] ऋषयो बभुवुः; तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्यो[21] वेदवचनादेवोपदेशनिरपेक्षं धर्मं प्रतिपत्तुमसमर्थेभ्य[22] इत्यर्थः । उपदेशेन चार्थस्य[23] मन्त्रान् ब्राह्मणानि च[24] संप्रादुः[25] । अस्य मन्त्रस्यायमस्य चायमित्येवमुपदेशेन मन्त्रार्थं ब्राह्मणार्थं च कथितवन्त इत्यर्थः[26] । उपदेशाय ग्लायन्तोऽवरे, ये तु ततोऽप्यवरे[27] वेदवचनात्स्वयमुपदेशमात्रेण[28] वा[29] तदर्थं प्रतिपत्तुमसमर्थास्त आत्मन उपदेशार्थं

१–[ धातु० ९२८, ९२९]
२–०त्रेणावतरेषु ग्रहीतुमशक्नुवत्सु तदनु० B C
३–बिल्व० B बिल्ह० C
४–बित्व B
५–चार्थस्मरणार्थम् A.
६–'दशमवकेन ग्रहणम०' नास्ति B C
७–'०ध्या०' नास्ति A
८–०जात A
९–यदन्यस्य स कृतकर्माण आर्ष B C
१०–तत् तत्र B. C
११–०न्थाहणार्थं ग्रहणार्थं C.
१२–'समाम्नातवन्तः, अर्थग्रहणार्थं' नास्ति B C
१३–०ङ्गान्यन्यत B C
१४–'च' नास्ति B C
१५–दीदीप्यन्ते, एवमाग० A
१६–०तस्ये० C १७–त एवंत B
१८–साक्षाद ( वेद C ) वचनादेवोपदेशं निरपेक्षं कृतः B C.
१९–'धर्मो' नास्ति A २०–०कर्माण B C
२१–०कर्मभ्यो B C २२–०वक्तु सम० B. C
२३–वार्पस्य A. २४–चार्थं प्रादुः A
२५–अयमस्य मन्त्रस्यायमस्येत्येव० B C
२६–'इत्यर्थः' नास्ति A
२७–०वरे न वेद० B C
२८–०नात् शुश्रूयमुप० A.
२९–'वा' नास्ति A

समाम्नातस्य सत उपाध्याया अर्थमुपदेक्ष्यन्ति, उपदिष्टार्थात्ततो वेदार्थं प्रतिपत्स्यामह इत्येवमर्थमित्यर्थः[1]। इमं ग्रन्थं गवादिदेवपत्न्यन्तं[2] समाम्नातवन्तः, वेदं धर्मप्रतिपत्त्यर्थम्, वेदाङ्गानि च अन्यान्यपि वेदार्थप्रतिपत्त्यर्थम्[3]। बिल्मग्रहणाय-बिल्मं[4] उपायस्तस्य[5] निर्वचनम्। भिल्मं भासनमिति[6] वा इति। बिल्ममिति[7] बिभर्त्तेरूपम्[8], उपायो बिभर्त्युपेयम्, भासते च प्रकाशीभवति। तत्तेन बिल्मशब्दस्य[9] चाप्रसिद्धस्य[10] लोके यदुपादानं निर्वचनं[11] च, कत्रचित्तस्य मन्त्रेषु प्रयोगोऽस्ति तदर्थम्, तद्दर्शयिष्याम —

"अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः॥"[12]

गृत्समदस्यार्षम्। अस्या ऋचोऽपान्नपाद्देवता, अपोनप्त्रीये सूक्ते समाम्नातत्वात्। अपान्नपाच्च मध्यमः। अस्मै प्रकृतायापांनप्त्रे बहूनां यजमानानामवमाय-अवम[13] इत्यन्तिकः नाम, अन्तिकाय सन्निकृष्टायात्यन्तं[14] प्राप्तायेत्यर्थः। सर्वत्रात्र[15] द्वितीयार्थे चतुर्थी। बहूनां सखायं[16] यज्ञैः सोमयागैर्ज्योतिष्टोमादिभिर्विधेम परिचरेमेत्याशास्महे, नमसा स्तुत्या च[17] हविर्भिश्च[17] पुरोडाशादिभिस्तदर्थं च सानु समुच्छ्रितं प्रदेशं[18] गार्हपत्यादिस्थललक्षणं वेदि-

---

१–'अर्थम्' इति नास्ति B C

२–गवादि B C

३–A पुस्तकेऽत्र भूयान् पाठो दुर्गव्याख्यायास्तन्नाम्नैव समुद्धृतो वर्त्तते। तथा हि—"दुर्गवृत्तौ–'तद्यथा-एकविंशतिधा बाह्वृचम् (च्यम्, मु०पा०) एकशतधाध्वर्यवम्, सहस्रधा सामवेदम्, नवधाथर्वणम्। वेदाङ्गान्यपि यथा—व्याकरणमष्टधा, निरुक्तं च ('च' नास्ति मु० पा०) चतुर्दशधा इत्येवमादि। एवं समाम्नासिषुर्भेदेन ग्रहणार्थम्। कथं नाम भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना अल्पायुषो मनुष्या इत्येवम्'–दुर्ग." –

४–'बिल्मग्रहणाय' नास्ति B. C

५–बिल्वमुपा० B

६–हित्व (०ल्म C.) हासनमिति B C

७–'बिल्ममिति' नास्ति B.

८–वर्त्तते B. C.

९–बिल्व० B

१०–साक्षात्प्रसि० A ०ब्दस्याप्रसि० B

११–०चनकारणं च B C. अत्र '०करण' इति पाठो युक्तः।

१२–[ ऋ० २।३५।१२ ]

१३–'अवम इति' नास्ति A

१४–'अत्यन्त' नास्ति A

१५–'अत्र' नास्ति A

१६–०नामसखाय B ०नाममसखा० C

१७–'च' नास्ति A

१८–प्रदेश. B C.

लक्षणं च संमार्ज्मि गोमयपाण्डुमृत्तिकादिना, दिधिषामि 'धिष धारणे'[1] धारयितुं चेच्छामि गार्हपत्यादिमग्निं[2] बिल्मैरुपायैर्[3]ज्वलनस्याधो[4] भस्मनि गोमयनिखननादिभि[5]र्दधामि धारयामि चैनमग्निं सायं प्रातश्चा[6]ग्निहोत्रद्रव्यलक्षणैर्यवाग्वादिभिः, परि वन्दे सर्वत स्तौमि, ऋग्भिः स्तुतिभिः। एवमस्मिन्मन्त्रे बिल्म[7]शब्दस्य प्रयोगादिहोपादानं निर्वचनं चैवमर्थं द्रष्टव्यम्।

निरुक्तस्य त्रीणि प्रकरणानि[8], तस्य परेण। 'एतावन्तः समानकर्माणः' इत्यादिना ग्रन्थेन त्रिष्वपि प्रकरणेषु[9] योऽर्थस्तं प्रदर्श्यैकस्य प्रकरणस्योत्कर्षो[10] द्वयोर्व्याख्या प्रतिज्ञायते। तत्रार्थप्रदर्शनार्थं तावदाह[11]–एतावन्तः समानकर्माणः[12] समानार्था धातवः, यथा–द्वाविंशशतं गतिकर्माणः[13], अष्टादश कान्तिकर्माणः[14]। धातुर्दधातेः स हि[15] धत्ते स्वार्थम्। एतावन्त्यस्य सत्त्वस्य[16] नामधेयानि, यथा–एकविंशतिः पृथिव्याः[17], पञ्चदश हिरण्यस्येति[18], एतौ[19] द्वावर्थावाद्ये नैघण्टुके प्रकरणे[20]। एतावतामर्थानामिदमभिधानम्, यथा–उपदयादीनां षण्णां[21] दयति। पुराणनवयोर्द्वयोर्नूचिदिति[22] निपातः[23]। प्रदर्शनार्थं चेदम्। वक्ष्यति–'अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमानिति[24], एतौ द्वावर्थौ[25] मध्यमे प्रकरणे नैगमे। नैघण्टुकमिदं देवता-

---

१–[ विष शब्दे, जुहो० परस्मै० ]
२–०पत्यमग्निं A
३–बिल्वै० B
४–०र्ज्वलस्य यैर्भस्म० A.
५–०मयानिख० A
६–०प्रातरग्नि० A
७–बिल्व० B
८–प्रकाराणि B. C.
९–प्रकारेषु B प्रकारेणेषु C.
१०–०स्याकर्षः B
११–'आह' नास्ति B. C
१२–'समानकर्माण' नास्ति A
१३–*cf.* निरु० ३।९।
१४–०कर्माणि B. C. *cf* निरु० ३।९
१५–स इह A.
१६–द्रव्यस्य नाम० B. C
१७–*cf* निरु० २।७।
१८–*cf*, निरु० २।१०।
१९–हेतौ B C
२०–०करणतो A
२१–प्रमादयति A. षण्णा भवति B
२२–०वयोनिचितीति A
२३–निपात B C
२४–०नीति B C.
२५–वावर्थौ C.

नाम । प्राधान्येनेदमिति–अयमर्थ उत्तमे प्रकरणे[1] दैवते । प्रसङ्गेन नैघण्टुकशब्दस्य[2] स्वरूपमुदाहरणं च प्रदर्शयति–'तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्' । 'अश्वं न[3] त्वा' इत्यत्राश्व., उपमानत्वेनोपादानात् । 'मृगो न भीमः'[4] इत्यत्र मृग. ।

"अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम्[3] ॥"

शुनःशेपस्यार्षम् । अश्वं[5] न त्वा वारवन्तमिति, कल्पितकादित्वाद्रत्वम्[6], उपमानभूतस्याश्वस्य[7] विशेषणमिदम् । वालवान् योऽश्वस्तमिव त्वा[8] त्वां वन्दध्यै वन्दितुमिच्छामः प्रार्थयाम इति वाक्यशेष. । अग्निं नमोभिः स्तुतिभि , सम्राजन्तं राजतिरैश्वर्यकर्मा सम्यगीशानमध्वराणां यज्ञानाम । अथवा राजतिर्दीप्त्यर्थ[9] , सम्यग्दीप्यमानम्, अध्वराणां मध्य इति वाक्यशेषः । सप्तम्यर्थे वा षष्ठी-अध्वरेषु[10] । वालशब्दस्य निगमप्रसक्तस्य निर्वचनम्–वाला दंशवारणार्था भवन्ति, पुच्छवालैर्ह्यश्वो[11] दंशान्[12] वारयति[13] । दंशशब्दस्य प्रसक्तानुप्रसक्तस्य निर्वचनम्- दंशो दशतेः, खादनार्थस्य, स हि खादति, प्रासङ्गिकमेतत् ।

"मृगो न भीमः कुचरो गिरिष्ठाः
परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं
वि शत्रून्ताळ्हि वि मृधो नुदस्व[14] ॥"

---

१–प्रक्रमे A
२–०ण्टुकस्य B C
३–[ऋ० १।२७।१]
४–[ऋ० १।१५४।२]
५–'अश्व' नास्ति A
६–कपिलका० B. C
७–०श्वस्येद् विशेषणम् B C.
८–'त्वा' नास्ति A
९–०प्त्यर्था B C
१०–इत आरभ्य 'निर्वचनमि'त्यन्त पाठो नास्ति B C
११–०लैरश्वो A ०वामेलर्ह्यश्वो C.
१२–दशो C
१३–इत आरभ्य 'निर्वचनमि'त्यन्त पाठो नास्ति B C.
१४–[ऋ० १०।१८०।२]

मृगो न भीम इत्यादीन्युपमानभूतस्य[1] मृगस्य विशेषणानि। भीमो भयानको मृगः सिंहो व्याघ्र वा कुचर कुत्सितकर्मा प्राणिबिलमुद्दिश्य[2] चरति। गिरिष्ठा[3] पर्वतस्थायी च, स यथा सर्वान् प्रतिवन्धकान्[4] घ्नन् तद्वत्। अथवा[5] कुचरो गिरिष्ठा[6] इतीन्द्रस्यैते विशेषणे[7] न मृगस्य, अप्रतिहतगतित्वात्। य.[8] सर्वत्र[9] चरति न क्वचिन्न चारीति[10] कुचर';
गिरिष्ठा[11] -गिरिर्मेघस्तस्मिन् हन्तव्ये तिष्ठतीति गिरिष्ठा, यस्त्वं[12] कुचरो गिरिष्ठाश्च स[13] यथा भीमो मृगस्तद्वत्, परावतो दूरादाजगन्थागच्छ, परस्या. इतीदं विशेषणम्, परस्माद्दूरादत्यन्तदूरादित्यर्थ[14]। आगत्य च सृकं वज्र[15] संशाय निशाय[16] पवि पवतिर्[17]गतिकर्मा[18], गन्तारं शत्रूणामुपरि हे इन्द्र! तिग्म तीक्ष्णं तेन विशत्रून् ताळ्हि[19] ताळहतिर्वधकर्मा, विविधं शत्रून् जहि,ये बलवन्तो ये त्वबलास्तान् मृध संग्राममकारिणो वि[20]नुदस्व प्रेरयेतोऽपनयेत्यर्थः[21]।

मृगादीनां परेण निर्वचनमुच्यते-मृगो मार्ष्टेर्गतिकर्मणः, भीमो बिभ्यत्यस्मात, भीष्मोऽप्येतस्मादेव[22] इति प्रासङ्गिकम्। कुचर इति-उपमानभूतमृगाभिधानं चेत्[23]-चरति कर्म कुत्सितम् इति निर्वचनम्। अथ चेदुपमेयदेवताभिधानम्-क्वा[24]यं न चरतीति, गिरिष्ठा गिरिस्थायी, यदि मृगस्ततो गिरिः पर्वतो विन्ध्यादिः[25], स हि समुद्गीर्ण इव भुवः[26], पर्वाण्यवयवा शिलादयस्तै पर्ववान् पर्वतः मत्वर्थे 'तप् पर्वमरुद्भ्याम्'[27] इति प्रासङ्गिक-

---

१—०नमभीतस्य विशे० B C
२—प्राणीवलयमु० B ०बिलयमु० C
३—गरिष्ठा B C
४—०बन्धान् A
५—यद्वा A
६—गिरिस्था A
७—'विशेषणे' नास्ति B C
८—यत् B. C
९—सर्वे A
१०—०चिचरतीति B C 'इति' नास्ति A.
११—गिरिस्थाः A
१२—'यस्त्व कुचरो गिरिष्ठा०' इति त्रुटितो भाति B.
१३—'स' नास्ति A
१४—०त्यर्थ C
१५—'वज्र' नास्ति B C.
१६—नीशापय B C
१७—पविति० B C
१८—*cf* निघ० २।१४
१९—ताहि ताहेतिर्वध० A
२०—'वि०' नास्ति A
२१—०येत्यापिनये० A.
२२—०वेत्यति प्रा० B C.
२३—चोत् B C
२४—काम B
२५—विन्ध्याद्रि A
२६—हुव B C.
२७—[ अष्टा० ५।२।१२२ सूत्रे वार्त्तिकम्] तन्निति

मेतत्। पर प्रसक्तानुप्रसक्तेन–पर्व पुनः पृणातेः प्रीणातेर्वा[१]। यत्तावद् अर्धमासपर्व पौर्णमास्यमावास्याख्यं[२] भवति, तत् पृणातेर्दानकर्मणः, दीयते हि तत्र पितृदेवमनुष्येभ्य[३], प्रीणातेर्वा देवान् दर्शपूर्णमासयोर्देवताभूतानग्न्यादीन्[४] अस्मिन् प्रीणयन्ति[५] इति। तत्प्रकृतीतरत् अङ्गुलिपर्ववंशपर्वादि[६], कुत[७] सन्धिसामान्यात्। अर्धमासपर्व-मासावयवयो[८] सन्धि, अङ्गुलिपर्वाङ्गुल्यवयवयोरेतत्संधिसामान्यम्[९]।

मेघस्थायीति, गिरिष्ठा[१०] इत्यस्य देवताभिधानत्वेऽर्थकथनम्, मेघोऽपि[११] गिरिरेतस्मादेव, समुद्गीर्णत्वात्[१२] सोऽपि हि समुद्गीर्ण इवान्तरिक्षेण। एवं त्रिष्वपि प्रकरणेषु[१३] योऽर्थः स प्रदर्शित। इदानीमेकस्य प्रकरणस्योत्कर्षो द्वयोर्व्याख्या प्रतिज्ञायते।

तद्यानि[१४] नामानि अग्निर्जातवेदा इत्यादीनि[१५] प्राधान्यस्तुतीनां देवतानां प्राधान्येन[१६] स्तुतिर्यासां देवतानां तासां देवतानां नामानि यत्र तत्प्रकरणं देवतानां समूहो दैवतमिति, एवं तद्दैवतमित्याचक्षते, तदुपरिष्टाद्[१७] व्याख्यास्यामः—अथातो दैवतमिति।

नैघण्टुकानि नैगमानीहेह[१८]। नैघण्टुकानि[१९] गौरित्यादीनि द्यावापृथिवीनामधेयपर्यन्तानि पदान्युच्यन्ते। तानि हि नियमेनान्यदैवते[२०][२१] मन्त्रे निपतन्ति। अनवगतसंस्कारा जहादयो यस्मिन्निगम्यन्ते, तन्मध्यमं प्रकरण नैगममित्युच्यते, तस्मिन् भवानि जहादीनि[२२]

१–'प्रीणाते' नास्ति B. C
२–पौर्णमास्याख्य A
३–देवपितृमनु० B C
४–०र्दैवभूतान्यग्न्यादी० A.
५–०णयतीति B C
६–'०पर्व वश०' इति त्रुटित A.
७–'कुतः' नास्ति A.
८–०यवपक्षयो B
९–०पर्वञ्चाङ्गु० B. C
१०–गिरिस्थ्य A
११–'अपि' नास्ति B C.
१२–समसमुद्गी० B. C.
१३–करणेषु B C
१४–तथापि A.
१५–इत्यादीना A
१६–'प्राधान्येन स्तुतिर्यासा देवताना' नास्ति B. 'तासा देवताना' इत्यपि नास्ति A.
१७–निरु० ७ to १२।
१८–एतद् वाक्य नास्ति A (नैघण्टुकानि निघ० अ०अ० १ to ३) नैगमानि० निघ०अ० ४)
१९–नैवमुक्तानि A.
२०–नियतोऽन्य० A.
२१–०देवते B.
२२–जहदादीनि B. C.

नैगमानि पदानि । इहेति कालः प्रतिनिर्दिश्यते, साकाङ्क्षत्वाच्च[1] वाक्यस्य व्याचक्ष्महे इति शेषः । नैघण्टुकानि नैगमानि चेदानीं व्याचक्ष्महे इत्यर्थः । इहेहेति[2] द्विर्वचनं ब्रह्मणाध्यायान्ते दृष्टत्वात् तद्[3]नुकरणेनाध्यायान्तप्रतिपत्त्यर्थम्[4] ।



इति स्कन्दस्वामिकृतायां निरुक्तटीकायां

षष्ठोऽध्यायः[5] ।



१–०त्वादन्य वा० B

२–इहेति द्वि० B C

३–'तद्' नास्ति B C

४–A पुस्तकेऽत्र भूयान् पाठो दुर्गव्याख्यायास्तन्नाम्नैव समुद्धृतो वर्त्तते, तथाहि —

"दुर्गवृत्तौ–'त्रिविधा हि शब्दव्यवस्था—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च। अत्रोत्कटः ('तत्रोक्त०' मु० पा०) क्रिया प्रत्यक्षवृत्तयः, अन्तर्लीनक्रिया परोक्षवृत्तयः, अतिपरोक्षवृत्तिष्वेषु (-षु शब्देषु, मु० पा०) निर्वचनाभ्युपायः । तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्या । तद्यथा—निघण्टव इत्यतिपरोक्षवृत्तिः, निगन्तव इति परोक्षवृत्तिः, निगमयितार इति प्रत्यक्षवृत्तिः । यस्मान्निगमयितार एते निगन्तव इति निघण्टव इत्युच्यन्ते ।

उक्तञ्च—

"वर्णागमो वर्णविपर्ययश्च,
द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योग-
स्तदुच्यते पञ्चविधं निरुक्तम् ॥"

(कारिका, अष्टक ६।३।१९)

नाम्नामप्येवम् । तद्यथा प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि । तत्र प्रत्यक्षक्रियाणि–कारको हारक इति । प्रकल्प्यक्रियाणि–गौरश्व इति । अविद्यमानक्रियाणि–डित्थः कपित्थ इत्येवम्' दुर्गः" ।

(सर्वं चेदं निघण्टुपदव्याख्यानावसरे प्रत्यपादि दुर्गेणेति) ।

५–इत्याचार्यस्कन्दस्वामिकृतौ निरुक्तभाष्यटीकायां षष्ठोऽध्यायः समाप्तः ।

FRAGMENTS OF THE COMMENTARY

OF

# SKANDASVĀMIN

ON THE

# NIRUKTA,

PRESERVED AS QUOTATIONS

BY

## DEVARĀJA YAJVAN

IN HIS COMMENTARY

ON THE

# NIGHANṬU



श्रीदेवराजयज्वकृतायां निघण्टुटीकायामुद्धृताः

श्रीस्कन्दस्वामिप्रणीत–

## निरुक्तभाष्यसन्दर्भाः ।

---

*N B*—Reference is to the Bib. Ind. Edition of the *Nirukta*.

# अथ स्कन्दस्वामिभाष्यम् ।

गौ (Ngh I 1)—अस्य स्कन्दस्वामी । 'दूरं गता भवति नैरन्तर्येणात्माकाशादिवत् । दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहार । अन्यत्रान्यत्र चोपलब्धेर्दूरोपदेश । प्रत्ययोपात्तरूढ्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्योपलब्धिदूरविशिष्टं गमनमुपादत्ते । तक्षा परिव्राजक इति यथा । यच्चास्यां भूतानि प्राणिनो गच्छन्ति । चो वार्थे । गातेर्वा स्तुत्यर्थस्य[1] । गीयते स्तूयतेऽसाविति । गायन्ति वास्यां स्थिता इति गौ । उदाहरणम् । 'गोषदसि'[2] इति । गार्हपत्योपस्थाने विनियोगात् गार्हपत्यस्य च गवि पृथिव्यां सदनात् गोशब्दस्य पृथिव्यभिधानत्वन्निश्चितमिति[3]" ॥

उर्वी (Ngh 1 1)—"छादनार्थं विशिष्टम" इति स्कन्दस्वामी[4] ॥

अदिति (Ngh 1 1)—'अदितिरदीना'[5] इत्यत्र भाष्ये स्कन्दस्वामी । "यद्यपि नञ्पूर्वात् द्यते क्तिनि 'द्यति-स्यति-मा-स्थाम्'[6] इतीत्वे रूप सिध्यति । तथापि द्यतेर्नित्यमपूर्वादर्थान्वयाच्च 'दीङ् क्षये'[7] इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यम् । तथा चोक्तम्—'न संस्कारमाद्रियेत अर्थो नित्य. (अर्थनित्यः) परीक्षेत'[8] इति ॥"

इळा (Ngh 1 1)—"इळश्छान्दसत्वादाकारलोप" इति स्कन्दस्वामी[10] ॥

निर्ऋतिः (Ngh 1 1)—अस्य स्कन्दस्वामी । "निरमणात् निश्चलत्वेनावस्थानात् इत्यर्थः । रमन्ते वास्यां भूतानि[11]"—इति ॥

अन्तरिक्षम् (Ngh I 3)—'अन्तरिक्षं कस्मात्[12]'—इत्यादिभाष्यस्य स्कन्दस्वामिग्रन्थो यथादृष्टं लिख्यते—" अन्तरा मध्ये सर्वभूतानां क्षान्तं शान्तं नि क्रियं वा । शान्तमव्यूहं विष्कम्भस्थानात्मकत्वात् । अन्तरा इमे रोदस्यौ क्षियतीति वा । अन्तरेमे क्षोण्याविति वा । एवमनेकविकल्पमुत्तरपदम् । पूर्वशरीरेष्वन्तरक्षयमिति वा । अन्त.-शब्दात् पूर्वपदमक्षयशब्दादुत्तरपदम् । विनाशिष्वप्यविनाशीत्यर्थ. "[13] इति ॥

अध्वरम् (Ngh I. 3)—"अध्वरं यज्ञम" इति स्कन्दस्वामी व्याख्याति[14] ॥

स्व (Ngh I 4)—स्वरादीनि षट् तु भाष्यकारेण स्कन्दस्वामिना च कृतव्याख्यानानीति नास्माभिरत्रोच्यन्ते[15] ॥

---

1 Cf Dhp III 25
2 Ms 1 1 2, 1 5, 4 1' 2, 2 15, Ks 1 2, 31 1
3 *Nirukta, Bib Ind ed* p 1 7
4 Op cit p 1 12
5 N 4 22
6 Panini VII 4 40
7 Dhp IV. 26
8 Cf N 2 1
9 Op Cit 1 14
10 Op Cit 1 15
11 Op Cit 1 15
12 N 2 10
13 Op Cit p 1 27
14 Op Cit p 1 31
15 Op Cit p 1 32

साध्या (Ngh I 5)—'रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति" इति स्कन्दस्वामी[1] ॥

काष्ठा (Ngh I 6)—'काष्ठा दिशो भवन्ति[2]' इत्यत्र स्कन्दस्वामी। "क्रान्त्वा सर्वमतीत्य स्थिता। आकाशवद् व्यतिरेकपक्षे। अव्यतिरेकेऽपि त एव शब्दादय. सर्वत्र सन्ति संस्थिताश्चेति। उपदिशोऽप्येवमेव। व्यतिरेकेऽपि इतरेतरापेक्षया परत्वापरत्ववत् सर्वत्र व्यवहारोऽस्तित्वमिति[3]" ॥

वस्तो (Ngh I 9)—अत्र स्कन्दस्वामी। "वस्तोरितीदृशमेवेदं नाम न विभक्त्यन्तरम्। 'दोषा वस्तोर्हविष्मती घृताची[4]'। 'दोषा वस्तोर्वहीयस प्रपित्वे[5]'। इति समस्तस्यापि दर्शनात्। वस्ते ज्योतिरिति वस्तो। द्योतत इति द्यौ.। एव सर्वत्र" इति[6] ॥

वासरम् (Ngh I 9)—'वासराणि वेसराणि[7]' इति भाष्ये स्कन्दस्वामी—"वेसरशब्दस्यायमेकारस्याकार। सादृश्येन चात्र वर्तते। यथा वेसरो निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वत्वजात्या गर्दभत्वजात्या सम्पन्न। एवं यावत् द्वौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चोष्णेन सम्बन्धाद् वेसरसदृशत्वाद् वासरम्" इति[8] ॥

अश्मा (Ngh I 10)—अत्र स्कन्दस्वामिना मेघत्वेन व्याख्यातम्[9]।

उपर, उपल. (Ngh I 10)—'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभि.[10]' इत्यादिभाष्यस्य स्कन्दस्वामिग्रन्थ'। "आ उपर उपल इति। आङ् अभिविधौ। मर्यादायामित्यन्ये। विना उपर उपल इत्येताभ्यां साधारणानीत्यर्थ'। आ उपरादिति वक्तव्ये उभयोरुपादानं रलयोरविशेषत्वप्रदर्शनार्थम्। तयोश्चैकनिर्वचनत्वप्रदर्शनार्थमेकयोगपक्षत्वं चाङ्गीकृत्याह। 'उपर उपलो मेघो भवति[11]' इति। वक्ष्यमाणनिगमापेक्षया उपलशब्दस्य च पाषाणे प्रसिद्धत्वात्। 'तेषामुपर स्थविष्ठो मध्यम' इति। तत् सङ्घातशब्दे पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम्। मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति उत्तराणि मेघस्यैवेति। यदा पर्वतस्तदा उपेत्य रमन्ते ह्यस्मिन् अभ्राणीति। मेघपक्षे आप इति। अभिविधिपक्षे नेदं निर्वचनम्"[12] इति ॥

अहिः (Ngh I 10)—अत्राहिशब्दं मेघनामत्वेनाभाषयत् स्कन्दस्वामी[13]।

वाङ्नामानि (Ngh I 11)—'वाङ्नामान्युत्तराणि[14]' इति भाष्ये स्कन्दस्वामी।

---

1 Op Cit p 1 38
2 N 2 15
3 Op Cit. p 1 41
4 RV VII 1 6
5 RV I 104 1
6 Op Cit p 1 54
7 N 4 7
8 Op Cit p 1 56
9. Op Cit p 1 63
10 N 2 21
11 N 2 21
12 Op Cit p 1 68
13 Op Cit p 1 70
14 N 2 21—3

"उत्तराणि सप्तपञ्चाशत् श्लोका इत्यादीनि वाङ्नामानि । उच्यते इति वाक् इन्द्रियम् । तत्कार्य शब्दोऽप्युच्यते इति वाक् । उच्यतेऽनया अर्थ इति वाक् । स्तनयित्नुलक्षणा माध्यमिका साप्युच्यते इति वाक् । तदधिष्ठात्र्यपि देवता वागिष्यते । सर्वतश्चास्या मेघहेतुत्वाद् मेघनामभ्य उत्तराणीति"[1] ॥

स्वाहा (Ngh I 11)—अस्य स्कन्दस्वामी । "स्वाहेत्येतत् स्वाहाकृतिशब्दस्य पूर्वपदं स्वाहाकारान्तो होममन्त्राणां कर्त्तव्य । 'न ह वै आहुतयो देवान् गच्छन्ति य अवषट्कृता वा अस्वाहाकृता वा भवन्ति' इति श्रुति[2] । स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यं भावित्वात् । अयमर्थो यस्यान्ते श्रूयते स होममन्त्र शोभनमर्थमाह । अथवा प्रजापते स्वा आत्मीया वागाहेति स्वाहाकाररूपा वाक् प्रजापतिसृष्टेत्यर्थ । अथवा स्वं प्राहेति यजमानस्य । स्वयं हविर्देवतायै दत्तं तदुद्देशेन त्यागात् । तस्य यजमानो सौवं प्राहेति स्वाहा । सम्प्रदानत्वं स्वाहाकारस्य स्पष्टमनेन प्रकारेण दर्शितं स्वाहुतमित्यादिना । अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठु मर्यादया जुहोतीति । एवं च सति पूर्वकाणि निर्वचनानि ब्रूम' । इदं तु जुहोतेरिति"[3] ॥

धिषणा (Ngh I 11)—इत्यत्र स्कन्दस्वामिना पठितात् "धिषि धारणे"[4] इति ॥

गल्दा (Ngh I 11)—"गल पूरणार्थ." स्कन्दस्वामिनोक्तं[5] ॥

क्ष्मा (Ngh I 12)—"क्ष्मद स्थैर्ये (सौ)"—इति स्कन्दस्वामी[6] ।

मधु (Ngh I 12)—"मेघोदरवर्ति सलिलं मध्वित्युच्यते । तत्र पुनर्वैद्युतात्मना दह्यमानं सर. स्वर्णेन तद्गतेनैव वायुना ध्मायमान धमति । 'धमतिर्गतिकर्मा'[7] वा । अन्तर्णीतण्यर्थो नि.कालेन द्रष्टव्य । निर्धाम्यते नि कल्यते हि तन्मेघात् । यद्वा 'मद तृप्तौ'[8] । अस्माद् बाहुलकादु-प्रत्ययो धान्तादेशश्च । माद्यन्ति हि तेन पीतेन प्राणिन । यद्वा मधुवत्स्वादुत्वात् मध्वित्युच्यते " इमानि स्कन्दस्वामिनिर्वचनानि[9] ॥

अहि (Ngh I 12)—'पृथिव्या नि शशा अहिम्'[10] इत्यत्र " 'शश प्लुतगतौ'[11] अन्तर्णीतण्यर्थः । निर्गमभूमौ पातनमुच्यते । अहि मेघं वृत्रमित्यर्थ "—इति स्कन्दस्वामिभाष्यम्[12] ।

सुखम् (Ngh I 12)—'सुखं कस्मात् । सुहितं खेभ्यः'[13] । इति भाष्ये स्कन्दस्वामी । "सुष्ठु हितं खेभ्य । नेयं 'हितयोगलक्षणा'[14] इन्द्रियाणामचैतन्यात् सुखादिभि-

---

1 Op Cit p ı 75
2 शत० ब्रा० १, ३, ३, ६, १४ ।
3 Op Cit p ı 84
4. Op Cit. p ı 91
5 Op Cit p ı 91
6 Op Cit p ı 98
7. Cf Ngh II. 14.
8 Cf Dhp X 165
9 Op Cit p ı 101
10 RV I 80 1
11 Dhp I 762
12 Op Cit P ı 110
13 N 3 13
14 9 8. 88

रसम्बन्धात् । अत इयं 'हेतौ पञ्चमी'[1] । इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वात् उपपद्यते । इन्द्रियाणां हेत्वर्थकयथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोगपदार्थान्तराध्याहार । अतिशयेन हित पुरुषस्य खेभ्य ख-हेतुकमित्यर्थ । हित वा पुरुषे आत्मधर्मत्वात् सुखादीनां धर्माधिकरणत्वाच्च धर्मिणाम । अथवा खेभ्य इति चतुर्थ्येव । ख-शब्देन च आत्मा मनसा सयुज्यते मन इन्द्रियेणेति सम्बन्धात् पुरुष एवोच्यते । इति यथाश्रुतसम्बन्ध । तथा चोपनिषद् । 'वर्ण्य स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः'[2] । क्षुराधाने अव्यवहितं स्यादित्युपलक्ष्य प्राणान्ते च प्राणानां भवतीति प्राणादिशब्दैस्तस्योहसिद्धं दर्शयति । 'ख पुन खनते'[3] । उत्पूर्वस्य उत्खनाति विनाशयति । किम् परब्रह्मप्राप्तिसुखम् । कथं कायसुखप्रवृत्तेरधोगमनात्" इति[4] ॥

क्षत्रम् ( Ngh I 12 ) "'क्षद स्थैर्ये'[5]" इति स्कन्दस्वामी[6] ।

यादु ( Ngh I 12 )—'ददाति मह्य यादुरी'[7] । इत्यत्र स्कन्दस्वामी—"यादुरीत्युदकनाम । रो मत्वर्थीय " इति[8] ।

मह ( Ngh I 12 )—'महो अर्ण'[9] इत्यत्र "मह उदकनाम" इति स्कन्दस्वामी । 'महोभ्य. स्वाहा'[10] इति च[11] ।

यव्या ( Ngh I 13 ) 'वियुते'[12] इत्यस्य निर्वचने स्कन्दस्वामिना प्रतिपादित । "'यु मिश्रणे'[13] इत्यय पठ्यते, प्रयुज्यते च । 'जनयत्यै त्वा सयौमि' इति । तथापि पृथग्भावेऽपि वर्त्तते । न चायं वेरुपसर्गस्यार्थ । केवलस्यापि दर्शनात् । 'युतं धनमस्य' । 'युतं भोजनमस्य' । 'युतोऽयम' इति । पृथग्भूत इति गम्यते"[14] इति ॥

वर्य ऋतावर्य ( Ngh I 13 )—अत्र स्कन्दस्वामिना 'नदीनाम' इति नोक्तम्[15] ।

अर्वा ( Ngh I 14 )—'अर्वैररणवान्'[16] इति भाष्ये स्कन्दस्वामी । "भाष्ये तु अर्वैररणवान् इत्यर्थप्राप्तवचन द्रष्टव्यम । अर्त्तेरन्तर्णीतण्यर्थाद्वा । 'अन्येभ्योऽपि दृश्यन्ते'[17] इति वनिनि रूपम । प्रेर्यते कशादिना प्रतिक्षणं पार्ष्ण्यादिनेति वा"[18] ।

दधिक्राः ( Ngh. I 14 )—अत्र स्कन्दस्वामी—"दधिक्राः । दधत् धारयत स्वारोहिणं क्रामति । दधत् क्रन्दाति हर्षार्थं ह्रेषारवं करोति । दधादित्याकारी भवति ।

1 Cf Pa II 3 24-25
2 The quotation is untraced
3 N 3 3.
4 Op Cit P i 114
5 Cf Dhp I. 51 क्षद स्थैर्ये ।
6. Op Cit P. i 114
7 RV I 126 6
8 Op Cit. P. i 115.
9. RV. i. 3. 12.
10 Ts 7 4 14 1
11 Op Cit p i 117
12 N 4 25
13 Dhp II 23
14 Op Cit p i. 132
15 Op Cit p i 140
16 Cf N 10 31
17 Pa III 2 75
18. Op. Cit. p. i. 144.

अधिष्ठितम्, ईषदवनतमध्यभाग· । उद्धतकन्धर । कुञ्चितघोण । स्तिमितचक्षु । कर्ण-शुक्तिकाकारो भवति"—ईति[1] ।

'नियुतो वायो (Ngh I 15)—"अप्-प्रवृत्तौ तृणपर्णानामवादे सञ्चरणान्मिश्रणान्नियुत" इति स्कन्दस्वामिग्रन्थो[2] ।

·जमत् (Ngh I 17)—अत्र स्कन्दस्वामी–"तावन्त्येवोत्तराणि जमदित्यादीनि ज्वलतो दीप्तिमत सत्त्वस्यनामधेयानि " इति[3] ।

घृणि (Ngh I 17)—'आघृणि' इत्यत्र, "ज्वलन्नामसु क्रोधनामसु च पाठादनेकार्थत्वम्"—इति स्कन्दस्वामिवचनात्[4][5] ।

'अध्यायपरिसमाप्तिसूचनं द्विर्वचनं, श्रुतौ तथा दर्शनात्—इति अत्र स्कन्दस्वामी । "अन्यत्रापि स एव सर्वत्र । यद्वा, द्विरुक्त-पदस्य शब्दशास्त्रे । 'तस्य परमाम्रेडितम्[6]' । इति महासञ्ज्ञाकरणस्य प्रयोजनं वर्णितम् । 'अन्वर्थसञ्ज्ञानम्, आम्रेड्यते अधिकमुच्यते' (भा० ८, १, २) इति[7] ।

'कर्मनामान्युत्तराणि' इति भाष्ये[8] स्कन्दस्वामी । "ज्वलनकर्मसम्बन्धात् आह कर्मनामान्युत्तराण्येव षड्विशति । अप अप्न" इत्यादीनि[9] ।

व्रतम् (Ngh II 1)—अत्र स्कन्दस्वामी । "व्रतमिति कर्मनामेति । कर्त्तरि सत इति कृतव्याख्यानम् । तद् द्विविधम् । शुभमशुभं वा । वृणोति निवध्नाति कर्त्तारम् । तथा च श्रुति· 'ते विद्याकर्मणी सम त्वारभते पूर्वप्रज्ञा[10] च'—इति । 'इदमपीदं व्रतम्[11]' गुडलवणस्त्र्यादिविषयनिवृत्तिरूपं कर्म । 'एतस्मादेव[11]' रूपसामान्यात् । प्रसक्तं व्रतं निरुच्यते । 'वारयतीति सत[11]' । निवृत्तिरूपो हि सङ्कल्प । तदतिक्रम्य प्रमादात प्रवर्त्तमानं पुरुषं वारयति"[12] इति ।

कर्त्वम् (Ngh II 1)—अत्र स्कन्दस्वामिभाष्यम् । "कर्त्वमिति कर्मनाम"[13] इति

कृत्वी (Ngh II 1)—अत्र स्कन्दस्वामिभाष्यम् । "कृत्वीति कर्मनाम । कर्मणि धने निमित्ते धनार्थं यत् कर्मेत्यर्थः । कर्मात्र संश्रीम· संग्रामार्थमाजि स्यात्" इति ।

'कृत्वी सवर्णामदद्विवस्वते[14]' इत्यत्र तु त्वान्तं तथा स्कन्दस्वामिना व्याख्यातत्वात्[15] ।

मनुष्या (Ngh II 3)—'मत्वा कर्माणि सीव्यति[16]' इति भाष्यस्य (भाष्ये) स्कन्द-

---

1 Op cit p ı 146
2 Op cit p ı 153
3 Op cit p ı 159
4 cf RV VI 55 I b, N 5 9
5 Op cit p ı 161
6 Pa VIII 1 2
7 Op cit p ı 162
8 N 3 1
9 Op. Cit p ı. 163
10 Cf Brih U 4 4 2 त विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ।
11 N 2 13
12 Op Cit p. ı 165
13 Op Cit p ı 168
14 RV X 17 2 b, N 12 10 b
15 Op Cit p. ı 169
16 N. 3 7.

स्वामी । "मत्वेत्यादिना मने सीवेश्च द्विधातुजत्वं प्रदर्शयति । ज्ञात्वाऽनेनेदमिति साध्यसाधनभावं कर्माणि सीव्यन्ति सन्तन्वन्ति यथा पञ्चादय मनस्यमानेन प्रजापतिना सृष्टा । मनस्यति कस्मिन्नर्थे । इत्याह । प्रशस्तीभावे । प्रशंसायां मत्वर्थीय. । प्रशस्तं मन प्रसन्नं सत्त्वप्राधान्यात् । अत प्रसन्नमनस्केन सृष्टा इत्यर्थ । तथा च श्रुति । 'स पितॄन् सृष्ट्वा मनस्यदनु मनुष्यानसृजत'[1]—इति । नित्यपक्षेऽप्यसति स्रष्टरि कार्ये सौमनस्यं दृष्ट्वा सृष्टिकारणानुविधायित्वात् कार्यस्य वा । 'मनोर्जातावञ्यतौ षुक् च'[2] इति वैयाकरणा । जातिश्च प्रत्ययान्तोपाधि । मनोरपत्यं जातिश्चेत्येतौ । अपत्यमात्रविवक्षायामन्तरेण च जाति भवति मानव" [3]इति ।

चर्षणय (Ngh II 3)—'पिता कुटस्य चर्षणि'[4] । इत्यत्र "चाययिता द्रष्टा" इति स्कन्दस्वामिना व्याख्यातम् ।[5]

पञ्चजना (Ngh II 3)—अस्य स्कन्दस्वामी—"पञ्चजना इत्येतस्य सन्दिग्धस्य विवेकार्थं निगमा भवन्ति । सन्देहश्च मनुष्यनामसु पाठात् । पञ्चशब्देन समानाधिकरण । तत्र यदि देवदत्तादिपञ्चकविषय स्यात्, गन्धर्वादिपञ्चकविषयो वा, न मनुष्यमात्रनामविषयतात्र स्यात् । मनुष्यमात्रनामैतदित्याचार्यमतान्तरप्रदर्शनाय पदद्वयमिदं मनुष्यपदार्थे वर्तते इति । वैचित्र्यप्रदर्शनार्थं उपन्यासः । न मनुष्यनामत्वेन च द्रष्टव्य । एकीयमतेन चाष्टौ देवताया उच्यन्ते । तत्र पक्षे नागानां गन्धर्वेषु, यक्षाणामसुरेषु, पिशाचाना रक्ष स्वन्तर्भावदृष्टत्वाविरोधात् । 'तदद्य वाचं'[6] । सौचीकस्याग्रे विश्वेषां देवानां संवादो होतृजपश्चायम् । तद् अद्य अस्मिन् कर्माणि वाचो माध्यमिकाया प्रथममुत्कृष्टं स्वरसौष्ठवार्थसदनत्वदेवताविशिष्टं मंसीय जानीय । येनाज्ञानेनासुरा यज्ञविघ्नं कुर्वन्त, हे देवा । अद्य तानभिभवेम । हे ऊर्जाद । उत अपि यज्ञियास, यज्ञस्य सम्पादयितार पञ्चजना आचार्यमतेन ऋत्विङ्मनुष्या । यमव्यवस्थपतीष्टौ निषादानां यज्ञसम्पादित्वमास्ति शूद्रस्याप्योदनसवे, 'आयुरसीति शूद्राय प्रयच्छति, तत्ते प्रयच्छामीति शूद्र प्रतिगृह्णाति'[7] इत्येवमादिना । तथा 'दासी पिनष्टि पत्नी वा'[8] इत्यत्र दास्यादेर्व्यापारादप्येवं यज्ञसम्पादित्वमेकीयमतेन । पञ्च यज्ञाङ्गभूता देवगन्धर्वादय साधनभावेन यज्ञसम्पादिन । अत उच्यते । 'मम होत्रं जुषध्वम्'[6] । होतृकर्म जुषध्वम् । सम्पादयतेत्यर्थ ।

---

1—cf TB 2 3 8 p 224—स पितॄन् सृष्ट्वा मनस्यत् । तदनु मनुष्यानसृजत ।

2 Pa IV 1 161

3 Op Cit p 1 177

4 RV 1 46 4 C, N 5 24

5 Op Cit p 1 130

6 RV X 53 4 N 3 8

7 The quotation is untraced

8 Āp Śr Sū I 21 8 Cf Bhāradvāja Śr Sū I 24 1 पत्नी पिनष्टि दासी वा । Cf Hiraṇyakeśi Śr Sū I 5

अन्ये मन्यन्ते । यदेकीयमतं यच्चौपमन्यवस्य तदुभयमप्याचार्यस्येति । तथा च मन्त्रव्याख्यानम् । पञ्चजातयो ब्राह्मणादयो यज्ञिया गन्धर्वादय सर्वेऽपि होत्रे मन्त्रेण व्यापारेण सेव्यध्वमिति । सम्प्रत्ययासाधारणं मनुष्यमात्रनामत्वेनैव निगमं दर्शयति । 'यत्पाञ्चजन्यया विशा'[1] । प्रगाथस्यार्षम् । यद् यदा पाञ्चजन्यया पञ्चजनेषु मनुष्येषु भवया विशेति पञ्चभिरपि मनुष्यजातैरित्यर्थ इत्यादि । पञ्चेति निर्वाच्यम् । पृक्तेति निर्वचनम् । मन्त्रेति विषयकथनं सम्बन्धवत् । सर्वलिङ्गैरित्याह । 'लिङ्गत्रययोगेप्यविशिष्टो'[2] इति । ननु पदार्था-न्यप्यविशिष्टानि । उच्यते । प्रत्ययोपात्तरूपसम्बन्धस्यार्थाभिधानाददोष इत्युक्तम् । अपि च (न) या पृक्ता सा पञ्चेति किन्तु या पञ्च सा पृक्तेति तदन्यत्र एकपद निरुक्तव्याख्या-नम्[3] । यत्पाञ्चजन्ययेत्यस्य द्वितीयपादादिव्याख्यानं चास्माकमत्रानुपयुक्तत्वान्न लिखितम्[5] ।

कक्ष्या (Ngh II 5)—'कक्ष्या प्रकाशयन्त्यनुष्ठानफलेन फलेन वा कर्माणि । ख्याते. कक्ष्यशब्दनिर्वचनम्[4]" इति स्कन्दस्वामी । कक्ष्यशब्दनिर्वचनपरे भाष्ये स्कन्द-स्वामिग्रन्थ ।" 'ख्या प्रकथने'[5] इत्यस्मात् स-प्रत्यये निरर्थको निर्निमित्तकोऽसौ स यकारा-कारयोर्लोपोऽभ्यासविकारश्च द्रष्टव्य "—[4] इति ।

जुषते (Ngh II 6)—"जुषते हर्यति इति पाठाद् जोष कार्म[6] " इति स्कन्द-स्वामिभाष्यम् ।

छन्त्सत् (Ngh II 6)—अत्र "मन्यते छन्त्सत् चाकनत् इति कान्तिकर्मसु पाठात्, 'तदिन्मे छन्त्सद् वपुष[7] ' इति प्रयोगदर्शनाच्च छदि. कान्त्यर्थे."[8] इति स्कन्दस्वामि-भाष्यम् ।

अन्ध (Ngh II 7)—'आभिमुख्येन हि ध्यातव्यं सर्वेणान्नं प्रीते शरीरस्थितेश्च तदायत्तत्वात्[9]" इति स्कन्दस्वामी ।

श्रव (Ngh II 7)—'उप प्रयोभिरा गतम्[10]' इत्यादिषु निरुक्तटीकायां स्कन्द-स्वामिना "प्रय इत्यन्ननाम" इत्युच्यते । तथाच 'आक्षिति श्रव[11]' इत्यादिनिगमेषु वेदभाष्ये, "श्रव इत्यन्ननाम" इति स्पष्टमुच्यते । निरुक्तटीकायां तूभयथा । अत. 'प्रय.', 'श्रव.'[12] शब्दयोरुभयोरप्यन्ननामत्वं स्पष्टम्[13] ।

1 RV VIII 63 7a, N 3 8
2 Cf N 3 8
3 Op cit p 1 185-7
4 Op Cit p 1 194
5 Dhp II 51.
6 Op Cit 1 201
7 RV X. 32 3
8 Op Cit 1 202
9 Op Cit 1 204
10 RV I 2 4b
11 RV I 40 4b
12 N 10 3
13 Op Cit 1 205—6.

पृक्ष॰ (Ngh II 7)—'त्रि. पृक्षो अस्मे अक्षरेव पिन्वतम्'[1] इत्यत्र स्कन्दस्वामि-भाष्यम्। "पृक्षा अन्ननामैतत् पठन्ति। 'पृक्षो भरन्त वाम्'[2] इत्यादिषु बहुवचनान्तस्य सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्" इति[3]।

सिनम् (Ngh II 7)—"सिनाति बध्नाति क्षुधा विनश्यन्ति भूतानि धारयति" इति स्कन्दस्वामी[4]।

धासि॰ (Ngh II 7)—अत्र "धासिरन्ननाम। इह तु पयस आसन्नकारणत्वात् गोषु प्रयुक्त" इति स्कन्दस्वामी[5]।

ऊर्क् (Ngh II 7)—"ऊर्जयति प्रयलति प्राणयति बलवन्त प्राणवन्तं वा करोतीत्यर्थ। 'पक्कमिति वा' पक्कशब्दस्य पकारलोपं कृत्वा कशब्दं व्यत्यस्य वकारस्योरि कृते रुगागमे चोर्गिति भवति। 'सुप्रवृक्कमिति वा' व्रश्चेरशब्दलोपे कृते, संयोगादिलोपे कृते, अकारस्योपरि रुकि ऊत्वे च कृते ऊर्गिति भवति। सुष्ठिदं हि तद्भवति मृदुत्वात्" इति स्कन्दस्वामिग्रन्थ॰[6]।

अविष्यन् (Ngh II 8)—अत्र च "अविष्यन्नत्तिकर्म्मा भक्षयन्नित्यर्थ॰" इति स्कन्दस्वामी[7]।

पाज (Ngh II 9)—'समिद्धस्य रुशददर्शि पाज॰'[8] इत्यत्र स्कन्दस्वामिना "पाजो बलम्" इत्येतावदेवोक्तम्। न तु बलनामेति। वाजशब्दे तु। 'परि वाजेषु भूषथ॰'[9]। इत्यत्र "बलनामैतत्" इत्युक्तम्। 'अत्यं न मिहे वि नयन्ति वाजिनम्'[10]। इत्यत्र। 'अत्यं न वाजं हवनस्यदं रथम्'[11]। इत्यादौ च ऋग्भाष्ये वाजशब्दोपरि "अपि बलनाम" इत्युच्यते[12]।

शर्द्ध (Ngh II 9)—"शर्द्धतिरुत्साहार्थ॰" इति स्कन्दस्वामी[13]।

नृम्णम् (Ngh II 9)—"नॄन् शत्रुभूतान् प्रति नमाति। ण्यर्थो वा नमि। नमयति प्रव्हीकरोति" इति स्कन्दस्वामी। 'इन्द्र नृम्णं हि ते शव॰'[14]। इत्यत्र ऋग्भाष्यम्। "यस्माच्छत्रुभूतानां मनुष्याणामपि नमनकरणं तव बलम्" इति[15]।

---

1 RV 1 34 4d
2 RV V 73 8b
3 Op Cit p 1 206
4 Op Cit p 1 207
5 Op Cit p 1 208
6 Op Cit, p 1 209
7 Op Cit P 1 214
8, RV V 1 2c
9 RV III 12 9c
10 RV I 64 6c
11 RV I 52 1c
12 Op Cit P 1 216
13 Op Cit P 1 217
14 RV 1 80 3c
15 Op Cit P 1 217.

शुष्मम् (Ngh II 9,)—"परस्परसांयोगिकमपि बलं विशेषयति उपमेययतीत्यर्थ." इतिस्कन्दस्वामी[1] ।

दक्ष (Ngh II 9)—"दक्षतिरुत्साहार्थे" इति स्कन्दस्वामी । 'मित्रं हुवे पूतदक्षम्'[2] । इति भाष्ये स्कन्दस्वामी । "दक्ष इति सकारान्तं बलनाम"[3] ।

राध (Ngh II 10)—"राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्" इति स्कन्दस्वामी[4] ।

वृत्रम् (Ngh II 10)—अत्र स्कन्दस्वामिना "वृत्रं धननाम" इति व्याख्यातत्वात् केषुचित् कोशेषु दृश्यमानमपि "वित्तम्" इति न पठनीयम्[5] ।

उस्रा (Ngh II 11)—"उत्स्राविणोऽस्यां भोगास्ते ऊर्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेण" इति स्कन्दस्वामी[6] ।

वनुष्यति (Ngh II 13)—'वनुष्यतिर्हन्तिकर्मा'[7] इत्यत्र स्कन्दस्वामी । "वनोतेः कण्ड्वादिप्रक्षेपाद् यक्प्रत्ययः[8] । तत्सन्नियोगेन च वनुभावो द्रष्टव्य." इति[9] ।

घृणि (Ngh II 13)—'मा हृणानस्य'[10] इत्यत्र भाष्ये "हृणिरिति क्रोधनामसु पाठात् हरति क्रोधार्थोऽपि गम्यते" इति स्कन्दस्वामी[11] ।

वर्तते (Ngh II 14)—अत्र 'वर्तते' इत्यादीनां गत्यर्थानां गतिकर्मकत्वं स्कन्दस्वामिना प्रतिपादितम् । अनेकार्थत्वाद्वा गतिकर्मत्वम्[12] ।

शवति (Ngh II 14)—"शव गतौ शु गतौ" इति स्कन्दस्वामी[13] ।

कण्टति (Ngh II 14)—"कण्टति पश्यति परान्" इति स्कन्दस्वामी[14] ।

बिस्यति (Ngh II 14)—अत्र "बिस्यतिर्गतिकर्मसु पठ्यते" इति स्कन्दस्वामी । ऋग्भाष्ये 'बिस्यति मिस्यति' इमौ नैरुक्तधातू[15] ।

कवते (Ngh II 14)—"कवतेर्गतिकर्मण कबन्धमुदकम्" इति स्कन्दस्वामी[16] ।

सक्षति (Ngh II 14)—"सक्षते सचतेर्वा गतिकर्मणो रूपम्" इति स्कन्दस्वामी[17] ।

म्यक्षति (Ngh II 14)—"म्यक्षेर्गतिकर्मणो रूपम्" इति स्कन्दस्वामी[18] ।

---

1 Op Cit P 1 218
2 RV 1 2 7a
3 Op Cit P 1 219
4 Op Cit P 1 226
5 Op Cit P 1 229
6 Op Cit P 1 230
7 N 5 2
8 Cf Pa III 1 27, कण्ड्वादिभ्यो यक्
9 Op Cit P 1 233
10 RV I 25 2c
11 Op Cit P 1 234
12 Op Cit P 1 239
13 Op Cit P 1 241
14 Op Cit p 1 242
15 Loc Cit
16 Op Cit p 1 243
17 Op Cit p 1 244
18 Loc Cit

सचति (Ngh II 14)—"सचत्यृच्छतीति गतिकर्मसु पाठात्" इति स्कन्दस्वामी[1]

धमति (Ngh II 14)—"धमि सौत्र" इति स्कन्दस्वामी[2]।

ऋण्वति (Ngh II 14)—"ऋण्वतिर्गतिकर्मा। अन्तर्णीतण्यर्थ । विविधं गमयति" इति स्कन्दस्वामिभाष्यम्[3]।

ऋणोति (Ngh II 14)—"ऋणोतिर्गतिकर्मा" इति स्कन्दस्वामिभाष्यम्[4]।

स्वरति (Ngh II 14)—अत्र "गतिकर्मा" इत्युक्तं स्कदस्वामी[5] (०मिना)।

रीयते (Ngh II 14)—"रीयते रेजतीति गतिकर्मसु पाठात गत्यर्थ" इति स्कन्दस्वामिभाष्यम्[6]।

रेजति (Ngh II 14)—"चलति गच्छतीत्यर्थ" इति स्कन्दस्वामी[7]।

अरुषति (Ngh II 14)—'प्र नीचीरग्ने अरुषीरजानन्'[8]। इत्यादिषु स्कन्दस्वामिभाष्यम् "अरुषतिर्गतिकर्मा" इति दृष्टम्[9]। 'युञ्जन्ति ब्रध्नमरुषं चरन्तम्'[10] इत्यादौ द्वित्रयो. प्रदेशयोः "अरुष्यतिर्गतिकर्मा" इत्यपि[11]।

ईषति (Ngh II 14)—"ईषतीति गतिकर्मसु पाठात्" इति स्कन्दस्वामी[12]।

ईङ्खते (Ngh II 14)—अत्र "ईङ्खतिर्गतिकर्मा" इति स्कन्दस्वामिभाष्यम्[13]।

जङ्घन्ति (Ngh II 14)—अत्र "जङ्घतेर्गतिकर्मण एतद्रूपम्" इति स्कन्दस्वामिभाष्यम्[14]।

वहते (Ngh II 14)—'वैश्वानरं मातरिश्वा परावत.'[15] इत्यत्र "परापूर्वस्य वहतेर्गतिकर्मण. परावच्छब्द" इति स्कन्दस्वामी[16]।

रथर्यति (Ngh II 14)—"रंहतेर्वा रथा। रंहणं गमनमिच्छतीति क्याचि रथीयतीति प्राप्ते रेफ उपजन ईडाभावश्च पृषोदरादित्वात्[17]" इति स्कन्दस्वामी[18]।

जेहते(Ngh II 14)—"ओ हाङ् गतावित्यस्य रूपम्" इति स्कन्दस्वामी[19]।

1 Op cit 1 244.
2 Op Cit p 1 246
3 Op Cit p 1 247
4. Loc Cit
5 Loc Cit
6 Op Cit p 1 248
7 Loc Cit
8 RV I 72 10d.
9 Op Cit p 1 249
10 RV. 1. 6 1.
11 Op Cit P 1 249
12 Op Cit P 1 250
13 Op Cit p 1 251
14 Op Cit p 1 252
15 RV VI 8 4d
16 Op Cit P 1 253
17 Cf Pa VI 3 109 पृषोदरादीनि यथोपदिष्टम्।
18 Op Cit 1 253
19. Loc Cit.

जमति (Ngh II 14)—"जामिर्जमतेर्गतिकर्म्मणः" इति स्कन्दस्वामी[1]।

जिगाति (Ngh II 14)—"जगतीति पाठान्तरम्" इति स्कन्दस्वामिभाष्यम्[2]।

द्रमाति (Ngh II 14)—"द्रमतिर्गतिकर्मा" इति स्कन्दस्वामी[3]।

क्षिप्रनामानि (Ngh II 14)—'क्षिप्रनामान्युत्तराणि षड्विंशति[4]' इत्यत्र भाष्ये "गुणस्य चैतानीति क्षिप्रस्य तद्वतो वा नामधेयानि। तथा च वक्ष्यति। 'भुरण्यु' 'शकुनि.'" इति स्कन्दस्वामी[5]।

भुरण्यु (Ngh II 15)—'येना पावक चक्षसा[6]' इत्यत्र स्कन्दस्वामिना "भुरण्यति शीघ्रकरणार्थे" इति प्रतिपादितम्। तत्र भुरण्यशब्दस्य शीघ्रविशिष्टगमनादिक्रियाकर्त्तरि सत्वन्येव वृत्ति। 'श्रीणन्नुप स्थादिवं भुरण्यु[7]'। इति निगम। "भुरण्यतेर्गतिकर्मण इदम्। क्षिप्रनाम वा" इति स्कन्दस्वामिभाष्यम्[8]।

आशु (Ngh II 15)—"आशु इदं क्षिप्रनाम क्षिप्रगामी" इति स्कन्दस्वामिभाष्यम्। तथा च स्कन्दस्वामी। 'एमाशुमाशवे भर[9]'। इत्यत्र ऋग्भाष्ये "आशुमिति क्षिप्रनामैतत्"[10] इति।

प्राशु (Ngh II 15)—'हस्तो हन्ते। प्राशुर्हनने[11]' इति भाष्ये "प्राशु क्षिप्र." इति स्कन्दस्वामी[12]।

आसात् (Ngh II 16)—"आसादित्यन्तिकनाम" इति स्कन्दस्वामिभाष्यम्[13]।

अम्बरम् (Ngh II 16)—स्कन्दस्वामिव्यतिरिक्तभाष्यकारमते। स्कन्दस्वामी तु "अन्तरिक्षनाम"[14] इति।

मीळ्हे (Ngh II 16)—'स्वर्मीळ्हे'[15]।"स्वरित्युदकनाम। उदकार्थे संग्रामे आजौ अन्यस्मिन्नपि संग्रामे" इति स्कन्दस्वामिभाष्यम्[16]।

स्पृध (Ngh II 17)—"स्पृध इति संग्रामनाम। तत्करोति (३,१,२५,वा,२) इति णिजन्तात् क्विप्। संग्रामकारिण इत्यर्थ' इति स्कन्दस्वामिभाष्यम्[17]।

मृध (Ngh II 17)—"मृधिर्हिंसार्थ." इति स्कन्दस्वामिभाष्यम्[18]।

समोहे (Ngh II 17)—'अभ्रिगव ओहम्[19]'। इत्यादौ "वहेरिदं रूपम्" इति स्कन्दस्वामी[20]।

---

1 Op Cit P 1 254
2 Op Cit P 1 255
3 Op Cit P 1 256
4 N 3 9
5 Op Cit P 1 258
6 RV 1 50. 6a
7. RV. 1 68 1a
8 Op Cit. P 1 261
9 RV 1 4 7a
10. Op Cit P 1. 262
11 N 1 7
12 Op Cit 1 262
13 Op Cit P 1 264
14 Op Cit P. 1 265
15 RV I 63. 6
16 Op Cit P 1 271
17 Op Cit P 1 272
18 Loc Cit.
19. RV 1 61 
20 Op Cit P 1 273.

नक्षति (Ngh II 18)—"इन्वति नक्षतीति व्याप्तिकर्मसु पठितस्य इकार आगमश्छान्दसः" इति स्कन्दस्वामिभाष्यम्[1]।

आपानः (Ngh II 18)—" 'आप्लृ व्याप्तौ'[2] शानच्। अन्ततेर्वधकर्मणस्तद्रूपम्" इति स्कन्दस्वामी[3]।

वधकर्माणि (Ngh II 19)—"व्याप्तिकर्मसु शाकपूणेरतिरिक्ता एव विव्याक., उरुव्यचा, विव्रे" इति स्कन्दस्वामी[4]।

स्नेहयति (Ngh II 19)—"स्नेहयतिर्वधकर्मा" इति स्कन्दस्वामी[5]।

वियात (Ngh II 19)—'तत्र वियात इत्येतद् वियातयत इति वियातयेति वा'[6] इति भाष्ये स्कन्दस्वामी तस्य समाधिमर्थं व्याचष्टे। "वि पूर्वस्य यातयतेर्वा ये प्रत्यये वियातय इति भवति धारय पारय इति वत् तस्य सम्बोधनं वियातयेति। वियातयितरिति वा पाठान्तरम्[7]" इति।

शम्नाति (Ngh II 19)—"शम्नातेः हिंसार्थस्य" इति स्कन्दस्वामी[8]।

मिनाति (Ngh II 19)—"मिनातिर्वधकर्मा" इति स्कन्दस्वामी[9]।

कुलिशः (Ngh II 20)—"कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोति" इति स्कन्दस्वामी[10]।

पति (Ngh II 22)—"अत्र पातेर्ण्यन्ताद् बाहुलकात् डति रूपसिद्धिश्च" स्कन्दस्वामिना उक्तं[11]।

इन —अर्थस्तु 'तत्रेन इत्येतत्सनित[12]' इत्यत्र स्कन्दस्वामिना विस्तरेणोक्तं[13]।

कृधु (Ngh III 2)—"निकृन्तमिव हि तद् भवति ह्रस्वत्वादेव" इति स्कन्दस्वामी[14]।

वम्रक (Ngh III 2)—"वम्रः ह्रस्वनामैतत् द्रष्टव्यम्। स्वार्थिककप्रत्ययान्तो ह्रस्वनामसु पठितम्" इति स्कन्दस्वामी[15]।

महत् (Ngh III 3)—"मानेन स्वगुणेन परिमाणेनान्यान्, यदपेक्ष्य तस्य महत्त्वं, तान् जहाति अतिक्रामति। मानशब्दात् जहातेश्चेति शाकपूणिः। निर्वचनलाघवात् मंहतेः पूजाकर्मणो वदत्ययार्च" इति स्कन्दस्वामी[16]।

बृहत् (Ngh III 3)—" ऋष्वस्य महन्नाम बलवत, बृहत एतदपि महन्ना-

---

1 Op Cit P 1 278
2 Dhp V 14
3 Op Cit P 1 279
4 Op Cit P 1 281
5. Op Cit P 1 283.
6 N 3 10
7 Op Cit P 1 283-
8. Op cit p. 1. 285.
9 Loc cit
10 Op cit p 1 289
11 Op cit p 1 293
12 N 3 11
13 Op cit 1 293
14 Op cit p 1 298
15 Op cit 1 293
16 Op cit pp 1 299-300.

मैव। वेगसम्बन्धेन च पुनरुक्ति । महत वेगेन शीघ्रस्येत्यर्थ" इति स्कन्दस्वामिभाष्यम्[1]।

* उक्षित (Ngh III 3)—"उक्षतिर्वृद्ध्यर्थे" इति स्कन्दस्वामी[2]।

यह्व (Ngh III 3)—"यातश्चासावाहूतश्च वार्थिभि । हूतश्चासौ शरणार्थिभिः। द्विधातुजत्वं दर्शितम' इति स्कन्दस्वामी[3]।

ववक्षिथ, विवक्षसे (Ngh III 3)—अनयोराख्यातयोर्महन्नामसु पठनीयत्वं महद्वाचकत्वं चोपपादितं स्कन्दस्वामिना[4]।

अम्भृण (Ngh III 3)—'पिशङ्गभृष्टिमम्भृणम्[5]' इत्यत्र "अम्भृणस्य महतः फलस्य हेतुभूता" इति स्कन्दस्वामी[6]।

ककुह (Ngh III 3)—"ककुह इति महन्नाम" इति स्कन्दस्वामी[7]।

पस्त्यम् (Ngh III 4)—"पस्त्यमिमि गृहनाम। 'अजादित्वात् टाप्[8]'," इति स्कन्दस्वामी[9]।

दुरोणे (Ngh III 4)—"दु शब्दपूर्वस्यावते रक्षणार्थस्य तर्पणार्थस्य वा । ल्युटि छान्दसत्वात् सम्प्रसारणम्। आद्गुणश्च। गृहादयो दु रवा भवन्ति दुस्तर्गा इति पर्यायेणास्यार्थकथनम्" इति स्कन्दस्वामी[10]।

सद्म (Ngh III 4)—"सद्म गृहनाम" इति स्कन्दस्वामी[11]।

जलाशम् (Ngh III 6)—"जलाषजं सुखादोषधम्" इति स्कन्दस्वामिभाष्यम्[12]।

स्योनम् (Ngh III 6)—"स्यते सेवतेश्च स्योनम्" इति व्याख्यातं स्कन्दस्वामिना[13]।

अप्स. (Ngh III 7)—स्कन्दस्वामिना अप्सशब्दो व्युत्पादित[14]।

पिष्टम् (Ngh III 7)—"पिशितम्, अवयवशो विभक्तमित्यर्थ" इति स्कन्दस्वामी[15]।

विचष्टे (Ngh III 11)—"चिक्यादित्यादीनि चायत्यर्थनिगमानि" इति स्कन्दस्वामिना भाष्यमुक्तम्[16]।

---

* The published text adds न ofter ०सम्बन्धेन।

1 Op cit pp 1 300—301

2 Op cit p 1 301

3. Op. cit p 1 303

4. Loc cit

5. RV I 133 5 a

6 Op cit p 1 304

7 Loc cit

8. Cf Pa IV 1 4, अजाद्यतष्टाप्।

9 Op cit p 1 308

10 Loc cit

11 Op cit p 1 310

12 Op cit p 1 317 The Passage is doubtful It might have been जलाशज सुखादौषवम्।

13 Loc cit

14 Op cit p 1 320

15 Op cit p 1 321

16 Op cit p 1 328

ह्वयते (Ngh III 14)—"हवा. स्तोमा । ह्वयतेरर्चतिकर्मत्वात्" इति स्कन्दस्वामी[1]।

रिहति (Ngh III 14)—"समानवृत्तित्वप्रदर्शनपरं लिहन्ति पर्यायवचनम्" इति। 'विप्रा रिहन्ति धीतिभि.'[2] इत्यत्र "रिहति धमतीत्यर्चति कर्मसु पाठात्" इति स्कन्दस्वामी[3]।

पनस्यति (Ngh III 14)—"पनस्यतिरर्चतिकर्मा, स्तुत्यमित्यर्थ." इति स्कन्दस्वामी[4]।

शशमान (Ngh III 14)—"शंसु स्तुतावित्यस्य शंशान्नित्यवगम्यते" इति स्कन्दस्वामी[5]।

पपृक्षा (Ngh III 14)—"पपृक्षा, महयति, इत्यर्चतिकर्मसु पाठात् पृच्छतिः स्तुत्यर्थोऽपि" इति स्कन्दस्वामी[6]।

मदति (Ngh III 14)—"मदति रसतीत्यर्चतिकर्मसु पाठात्" इति स्कन्दस्वामिभाष्यम्[7]।

स्वरति (Ngh III 14)—'स्वरेणाद्रिम्'[8], इत्यत्र "स्वरति वेनतीत्यर्चतिकर्मसु पाठात्" इति। 'ऋभिस्वरम्'[9] इत्यत्र "स्वरतिरर्चतिकर्मा" इति च स्कन्दस्वामी[10]।

वेनति (Ngh III 14)—"मन्द्रयतिरर्चतिकर्मा स्तुत्यवाचकम्" इति स्कन्दस्वामी[11]।

नवेदा (Ngh III 15)—"नवेदेति न वेत्तीत्यस्मिन्नर्थे वर्त्तते। कुत एतत्। निपातनात् वैयाकरणा.। 'नभ्राण्नपान्नवेदा'[12] इति निपातयन्ति" इति स्कन्दस्वामी[13]।

कवि (Ngh III 15)—"क्रामते कवतेर्वा गतिकर्मण इति रूपम्" इति स्कन्दस्वामी[14]।

गौ (Ngh III 16)—"गोपति स्तोत्रपति" इति स्कन्दस्वामी[15]।

यज्ञ (Ngh III 17)—भाष्यकारेण, स्कन्दस्वामिना च यज्ञशब्दो बहुधा व्युत्पादित[16]।

भारता (Ngh III 18)—"यज्ञद्वारेण नॄन् सम्भरतीति" स्कन्दस्वामी[17]।

---

1 Op Cit p 1 333
2 RV I 22 11 b
3 Op Cit. p 1 333
4 Loc Cit
5 Op Cit p 1 335
6 Op Cit p 1 336.
7 Op Cit P 1. 337.
8 RV. I 62 4 b
9 RV V 44 8 b
10 Op Cit p 1 337  11 Loc Cit.
12 A fragment Pa VI 3 75
13 Op Cit P 1 340-41
14 Op Cit P 1 341
15 Op Cit p 1 345
16 Op Cit p 1 347
17 Op Cit p 1 350.

मन्महे (Ngh III 19)—"ईमहे, यामि, मन्महे इति याच्ञाकर्मसु पाठात्" इति स्कन्दस्वामी[1]।

पूर्द्धि (Ngh III 19)—"शग्धिपूर्द्धीति याच्ञाकर्मसु पाठात् शकिपृणाती याच्ञाकर्माणौ" स्कन्दस्वामिभाष्ये उक्तम्[2]।

शिक्षति (Ngh III 20)—"शिक्षतिर्दानकर्मा पठित." इति स्कन्दस्वामिभाष्यम्[3]।

तायु (Ngh III 24)—"उपक्षीणोऽसाविह लोके आयुषा। यदा तदा राज्ञा-मारिष्यमाणत्वात्। परलोकेऽपि भ्रमणधर्मकत्वात्" इति स्कन्दस्वामी[4]।

तस्कर (Ngh III 24.)—"दिवा पथि मोषणेन, रात्रौ सन्धिच्छेदनेन" इति स्कन्दस्वामी[5]।

अपीच्यम् (Ngh III 25)—"प्रत्यपचितं स्थितम्" इति स्कन्दस्वामी[6]।

स्वधे (Ngh III 30)—अत्र स्कन्दस्वामी। "मिथुनानि द्विवचनसंयुक्तानि नामानि 'स्वधे पुरन्ध्री' इत्यादीनि स्तोतृभ्य "—इति[7]।

दूरे अन्ते (Ngh III 30)—"दु खेन गम्यते दूरमतोह्यादेर्मध्याच्च सततगतौ भवति, न कदाचिदादौ मध्ये वास्ति" इति स्कन्दस्वामी[8]।

अपारे (Ngh III 30)—"अविद्यमानं पारमन्तर्धयो. ते अपारे। दूरत्वेन पराभवं दर्शयति पुराणदृष्ट्या वा लोकपर्यन्तताम्" इति स्कन्दस्वामी[9]।

इदमाद्युपमानामानि। भाष्यकारेण स्कन्दस्वामिना च विस्तरेण व्याख्यातानि[10]।

त्व (Ngh III 29)—"त्व अपगतः, अपेत्य समुदायाद् गत. पृथग्भूत.। तनोतेरुपधाया. पूर्वं उकार, यणादेश, नकारस्य विसर्जनीय." इति स्कन्दस्वामी[11]।

जरते (Ngh IV 1)—"यद्वा 'गॄ स्तुतौ'[12] इत्यस्य गकारस्य जकार" इति स्कन्दस्वामी[13]।

इत्था (Ngh IV 2)—"अमुथा[14] इत्यर्थकथनम्। कथमिति निरूपणीयम्। इत्थाविति" स्कन्दस्वामिग्रन्थश्च निरूपणीय.[15]।

इमशा (Ngh IV 2)—श्म अश्नुते इति निर्वचनं स्कन्दस्वामिग्रन्थे नास्ति[16]।

गिर्वणा (Ngh IV 3)—"'गीर्भिरेनं वनयन्ति'[17] इत्यर्थनिवर्चनमिति" स्कन्दस्वामी[18]।

जारयायि (Ngh IV 3)—अजायतेत्येव स्कन्दस्वामिनोऽप्यवगम.[19]।

---

1 Op Cit P 1 352
2 Op Cit p 1 353
3 Op Cit P 1 356
4 Op Cit P 1 363
5 Loc Cit
6 Op Cit P 1 366
7 Op Cit P 1 372
8 Op Cit P 1 376
9 Loc Cit
10 Op Cit P 1 380
11 Op Cit P. 1 383
12 Cf Dhp IX 28, गॄ शब्दे।
13 Op Cit P 1 401
14 N 5 5
15 Op Cit p 1 410
16 Op Cit p 1 415
17 N 6 14
18 Op Cit P 1 440
19 Op Cit P 1 441